ॐ श्रीगणेशाय नमः
"धर्मोऽस्मत्कुलदैवतम्"

स्वर्गसोपान मार्गप्रदीपस्य ४ भागः

# श्री धर्मशान्तिः
# (उत्तरनारायणबलिः)

सप्तदशाहश्राद्धम्

सम्पादकः—
**बिहारीलाल शास्त्री वासिष्ठः**
श्रीरणबीर केन्द्रीय संस्कृत विद्यापीठ जम्मू ।

प्रकाशकः—
**पं० ऋषिव्रत शास्त्री वासिष्ठः**
खिहाडियां वास्तव्य

प्रेरकः—गोस्वामी श्री १०८ पूर्णगिरि गुरुवराणां पट्टशिष्यः
**पं० कुलदीप शर्मा**
नगरोटा उपरेता बसोहली

वैष्णवी प्रिंटिंगप्रैस वाईपास सिद्धाटवी (सेधड़ा) जम्मू तद्विषी

श्रीपूर्णाऽऽविर्भाव:

जम्मूप्रान्ते तविषि सरित: स्रोतसा कल्पमूले
गौरीकुण्डे हिमगिरिसुतास्नानपुण्योदकेषू ।
अत्रेर्वंशे परमतपसाराधानाद्यैश्च धन्ये
गण्ये मान्ये द्विजवरगृहे जन्मपूर्ण प्रभूणाम् ॥



श्रीपूर्णशिवसायुज्य प्राप्ति:

(श्री) पूर्णात्मानो रसयुगनखं २०४६ वैक्रमे श्रावणेऽमा
गौरीकुण्डे पथिकसुखदं रम्यहर्म्यं विधाय ॥
कर्कस्थेऽर्के धवलदलभाक् पक्षतौ बुद्धवारे
योगेनान्त्ये जनुभुवि महादेवलोकं प्रपन्ना: ॥

# सम्पादकीयम्

धर्मशान्ति चन्द्रभागा के पश्चिमीतट से लेकर डुग्गर, पञ्जावादि में समस्त सनातन धर्मावलम्वी महानुभाव दिवङ्गत प्राणी के आत्मा की शान्ति के लिये सप्तदशाहश्राद्ध करवाते हैं। सपिण्डी के पूर्व होने वाली नारायण वलि के अनुरूपही यह उत्तरनारायणवलि का विधान किया जाता है। इस में केवल पूर्वनारायण वलि में आनेवाली अन्त्येष्टि की ४२ आहुतियें, नारायण-षोडशी में एकादशीपिण्ड विधान एवं प्रेत स्थान में तत्पुरुष शब्द के ऊह का ही विधान है। इसका विधान इस लिये है कि सनातन धर्म जनता हिमाचल एवं डुग्रप्रान्त में सपिण्डी के वाद चार वर्ष तक कोई सम्वन्घी व पण्डित, पुरोहितगुरु आदि उनके घरका जल पान तक नहीं करता। और समग्रभारत में कुछ प्रान्तों में सपिण्डी के वाद उनके यहां खाने पीने का विचार नहीं करते। भारत के कुछ प्रान्तों में प्रथम वार्षिक (सांवत्सरिक) श्राद्धको ही शुद्धश्राद्ध कर देते हैं। सोलह मासिक श्राद्धों में १६ सौम्यादिपुरों में प्राणी "षोडश धर्मपुरीषु शेते इति पुरुषः" के अनुसार प्रेत की तत्पुरुष संज्ञा हो जाती है अतः खाने पीने में किसी प्रकार की आपत्ति नहीं समझते। चन्द्रभागा के पश्चिमीतट के वास्तव्य पण्डित लोगों की प्रेरणा इस श्राद्ध को स्वर्ग सोपान में समाविष्ट करने के लिये १९८९ से ही चलती आरही है उन दिनों में ही इसे आचार्य डा० हरीशशर्मा राजपुरोहित पालमपुर के द्वारा टाईप कराकर प्रेस में रख दिया था। जिस में सम्पूर्ण नारायण वलि विधान एवं श्रवणादि पञ्चक शान्ति भी समाविष्ट थी किन्तु अन्य कर्मकाण्ड के ग्रन्थों के सम्पादन से इसको पीछे २ करते उस टाईप कापी के पत्ते भी अस्त व्यस्त होगये। मेरे स्वास्थ्य की विकृति से लगभग दो वर्ष २००० ई० से २००२ के आरम्भ तक मुद्रणकार्य स्थगित ही रहा अव पुनः अक्षय तृतीया से धीरे २ काम चलाऊ है। इसमें कई प्रकार का अशुद्धिएं रही हैं पण्डित लोग स्वयं सुधार कर प्रयोग करेंगे। इसके अतिरिक्त शेष ग्रन्थों के मुद्रण का भी विचार कर रहे हैं आशा है कि शीघ्र ही आपके करकमलों में समर्पण का प्रयत्न सफलहोगा।

विदुषां विधेयः

वैक्रमाब्दाः २०५९

**श्री व्यासपूर्णिमायां बुधे**

२५।७।२००२ ई०

आर्षविहारी विहार

**विहारीलालशास्त्री वासिष्ठः**

२३. श्री रघुनाथपुरी, जम्मू (तविषी)

स्व. पूज्यपिता पं. चरणदास जी वैद्य एवं स्व. पूज्यमाता श्री सीतादेवी



जन्म सं० १९६५ आश्विन शु० एकादशी मङ्गलवार ५'१०'१९०८
स्वर्ग. सं० २०४५ पौष कृ. सप्तमी गुरुवार ब्राह्ममहूर्त २-/१२/१९८८

यह (धर्मशान्ति) नामक

लघु पुस्तिका स्व० पूज्यमाता जी की नित्य आत्मशान्ति के लिए समस्त आचार्य संप्रदाय को सादर समर्पित करता हूं ॥

निवेदकः

**विहारीलाल शास्त्री वासिष्ठ**

स्वर्गीय पूज्यमाता श्रीमती वीरवती जी



जन्म सवत् १९८९ मार्गशीर्ष शु० चतुर्दशी रात्रौ १ बजे वीरवार
स्वर्गवास-सं. २०५३ शुद्धआषाढ शु० सप्तमी रात्रौ १२ सोमवार

**धर्मशान्ति प्रथम संस्करण में**

स्वर्गीय पूज्यमाता श्रीमती वीरवती जी की अनन्त आत्मशान्ति के लिये श्रद्धाञ्जलि अर्पण करता हूं।

**निवेदक:—ऋषिव्रतशर्मा वासिष्ठ**

## ॐ अथ धर्म शान्तिः ॐ

**शान्ति पाठः**

ॐ पूर्णमदः पूर्णमिदं पूर्णात्पूर्णं मुदच्यते ।
पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ॥
ॐ शान्तिः शान्तिः शान्तिः ।

### आत्मपूजा

**पवित्रधारणम्**— ॐ पवित्रमूर्तये नमः ।

**आत्माभिषेकः**— ॐ अपवित्रः पवित्रो वा सर्वावस्थां गतोऽपि वा ।
यः स्मरेत्पुण्डरी काक्षं सबाह्याभ्यन्तरः शुचिः ॥

**आचमनम्**:—ॐ केशवाय नमः ॐ नारायणाय नमः ॐ माधवाय नमः ।

**हस्तशोधनम्**— ॐ श्रीकृष्ण परमात्मने नमः ।

**आत्मतिलकम्** चन्दनं वन्द्यते नित्यं पवित्रं पापनाशनम् ।
आपदांमपहर्तारं दीर्घायुष्प्रदं सदा ॥

**दिग्बन्धनम्**— नमोनमस्ते गोविन्द पुराण पुरुषोत्तम ।
धर्मशान्ति हृषीकेश रक्षतां सर्वतोदिशः ।

ओं प्राच्यैनमः, ओं अवाच्यैनमः, ओं प्रताच्यैनमः, ओं उदीच्यैनमः,
ओं अन्तरिक्षाय नमः, ओं शान्ति भूम्यै नमः ॥

**विनियोगः**— ओं पृथ्वीतिमन्त्रस्य मेरुपृष्ठऋषिः सुतलं छन्दः कूर्मोदेवता आसनशोधनेभू मिपूजने च विनियोगः । आधारशक्तये नमः गन्धादिना संपूज्य

**भू प्रार्थना**:—पृथ्वि त्वया धृतालोका देवि त्वं विष्णु ना धृता ।
त्वं च धारय मां देवि पवित्रं कुरुचासनम् ॥

सूर्याय प्रत्यक्ष देवाय नमः गन्धद्यैः पूजान्ते ।

**सूर्य प्रार्थना:**—नमो धर्म निधानाय नमः सुकृत साक्षिणे नमः
प्रत्यक्षदेवाय भास्कराय नमोनमः ॥

दीपाय नमः गन्धादिना पूजान्ते

**प्रार्थना**—दीपज्योतिः परब्रह्म दीपज्योतिर्जनार्दनः ।
दीपज्योतिर्हरेत्पापं दीपज्योतिर्नमोऽस्तुते ॥

धूपाधिष्ठातृ देवाय नमः गन्धादिना सम्पूज्य ।

**प्रार्थना:**—वनस्पतिरसोद्भूत गन्धाढ्य सुमनोहर ।
आघ्रेय सर्व देवानां धूप ज्योतिर्नमोऽस्तुते ॥

**प्रतिज्ञा संकल्प**. देशकालौ संकीर्त्यामुक शर्माहं अमुक सम्बन्धिनः सद्गति प्राप्त्यर्थं नारायण प्रसादद्वारा धर्मशान्ति करिष्ये। तदङ्गत्वेन नवग्रहाधिदेव प्रत्यधिदेव लोकपाल पूर्वकं गणपति पूजनं च करिष्ये।

**आचार्यवरणम्**—अद्यधर्म शान्ति कर्मणः साङ्गतार्थं मेभिर्वरण द्रव्यैरमुगोत्र ममुक शर्माणं भूदेवं माचार्यत्येन त्वामहं वृणे। वृतोऽस्मि ।

**प्रार्थना**—आचार्यस्तु यथा स्वर्गे शक्रादीनां वृहस्पतिः ।
तथा त्वं ममयज्ञेऽस्मिन्नाचार्य भव भो द्विज ॥

**स्वस्तिवाचनम्**:—ओं स्वस्ति नऽइन्द्रो वृद्धश्रवाः स्वस्ति नः पूषाविश्ववेदाः।
स्वस्ति नस्तार्क्ष्योऽअरिष्टनेमिः स्वस्ति नो वृहस्पतिर्दधातु ॥

ओं एकदन्ताय विद्महे वक्रतुण्डाय धीमहि। तन्नोदन्ती प्रचोदयात्।

ओं ऋद्धि देव्यै च विद्महे सिद्धि देव्यै च धीमहि तानः शक्तिः प्रचोदयात्।

ओं ऋद्धि सिद्धि सहिताय सशक्तिकाय सपरिवाराय महागणाधिपतये नमः षोडशोपचारान् समर्पयामि ॥

**आवाहनम्**—ओं सुमुखाय नमः। **आसनम्**—ओं एकदन्ताय नमः।
**पाद्यम्**—ओं कपिलाय नमः। **अर्घ्यम्**—ओं गजकर्णाय नमः।

आचमनीयम्—ओं लम्बोदराय नमः। स्नानीयम्—ओं विकटाय नमः।
(पञ्चामृतेन स्नानम्—ओं पञ्चाननाय नमः)
वस्त्रोपवस्त्रम्—ओं विघ्ननाशाय नमः। यज्ञोपवीतम् ओं विनायकाय नमः।
तिलकम् —ओं धूम्रकेतवे नकः। सदूर्वाक्षतेपुष्पाणि—ओं गणाध्यकाय नमः।
धूपम्—ओं भालचन्द्राय नमः। दीपम्—ओं गजाननाय नमः।
नैवेद्यम्—ओं वक्रतुण्डाय नमः। आरती -ओं शूर्पकरणाय नमः।
प्र(दक्षिणा)—ओं हेरम्बाय नमः। पुष्पाञ्जलिः—ओं स्कन्दपूर्वजाय नमः।

## प्रार्थना

सुमुखश्चैक दन्तश्च कपिलोगजकर्णकः।
लम्बोदरश्च विकटो विघ्मनाशो बिनायक ॥

धूम्रकेतुर्गणाध्यक्षो भालचन्द्रो गजाननः।
वक्रतुण्डः शूर्पकर्णौ हेरम्ब स्कन्द पूर्वजः।

षोडशैतानि नामानि यः पठेच्छृणुयादपि।
विद्यारम्भे विवाहे च प्रवेशे निर्गमे तथा ॥

संग्रामे संकटे चैव विघ्नस्तस्य न जायते।
प्राणिनां सद्गतिश्चैव स्मरणादेवदन्तिनः ॥

अनेन षोडशोपचार पूजनेन श्री मन्महागणाधिपः प्रीयतां न मम ॥

ओं पञ्चोङ्कारेभ्यो नमः गन्धादिभिरभ्यर्च्य।

प्रार्थना— ब्रह्मादेवी च गायत्रीं कृष्णो गोवर्धनेश्वरः।
पृथ्वी यज्ञपतिश्चैव पञ्चोङ्कारा न्नमाम्यहम् ॥

गौर्यादिषोडश मातृकाभ्यो नमः गन्धादिनाभ्यर्च्य।

प्रार्थना—गौरीपद्मा शची मेधा सावित्री विजया जया।
देवसेना स्वधा स्वाहा मातृका लोकमातृका ॥
धृति पुष्टि स्तथा तुष्टिरात्तथात्म कुलदेवता।
गणेशेनाधिकाह्येत यज्ञे पूज्याश्च मातरः ॥

श्रीत्यादिभ्यः सप्तमातृकाभ्यो नमः गन्धाद्यैः सम्पूज्य।

प्रार्थना:—श्रीर्लक्ष्मीर्धृतिमेधा स्वधा स्वाहा सरस्वती ।
पूज्याः सद्गति कृत्येषु सप्तैता घृतमातरः ।।

अग्निस्थापनम्:— स्थण्डिले पञ्चभू संस्कार पूर्वकं कांस्यपात्रेणाग्नि संस्थाप्य गन्धाद्यैः सम्पूज्य ।।

ओं अग्नि प्रज्वलितं वन्दे जातवेदं हुताशनम् ।
हिरण्यवर्णममलं विशुद्ध सर्वतोमुखम् ।।
सर्वतः पाणिपादं तत्सर्वतोऽक्षिशिरो मुखम् ।
वैश्वानरो महानग्निः प्रणीतः सर्वकर्मसु ।।
वरदानामाग्नये नमः ।

## अथ ग्रहपूजा—

सूर्यः— ओं आदित्याय विद्महे दिवाकराय धीमहि ।
तन्न सूर्यः प्रचोदयात् ।१।

चन्द्रः— ओं अत्रिपुत्राय विद्महे सुधानाथाय धीमहि ।
तन्नश्चन्द्र प्रचोदयात् ।२।

भौमः— ओं क्षितिसुताय विद्महे लोहिताङ्गाय धीमहि ।
तन्नो भौमः प्रचोदयात् ३।

बुधः ओं चन्द्रपुत्राय विद्महे रौहिणयाय धीमहि ।
तन्नो बुधः प्रचोदयात् ।४

गुरुः— ओं आङ्गिरसाय विद्महे देवाचार्याय धीमहि ।
तन्नो जीव प्रचोदयात् ।५।

शुक्रः— ओं भृगुपुत्राय विद्महे दिव्यात्मजाय धीमहि ।
तन्नः शुक्र प्रचोदयात् ६

शनिः— ओं रविपुत्राय विद्महे छायासुताय धीमहि ।
तन्नः शनिः प्रचोदयात् ।७

राहुः— ओं शीर्षरूपाय विद्महे सैंहिकेयाय धीमहि ।
तन्नो राहुः प्रचोदयात् ।८।

केतु:— ओं शिरोहीनाय विद्महे कबन्धाय च धीमहि ।
तन्नः केतुः प्रचोदयात् ।९।

प्रार्थना:-- गायत्र्याऽऽवाहिता देवा भास्कराद्या नवग्रहाः ।
मण्डले पूजिता भक्त्या पुंसः (स्त्रियः) कुर्वन्तु सद्गतिम् ॥

## ग्रहाणामधिदेवपूजा

त्र्यम्बक — ओं त्र्यम्बकाय विद्महे मृत्युञ्जयाय धीमहि ।
तन्नः शम्भुः प्रचोदयात् ।१०।

उमा:--- ओं गणाम्बिकायै विद्महे कर्मसिद्ध्यै च धीमहि ।
तन्नो गौरी प्रचोदयात् ।११

स्कन्द:-- ओं षडाननाय विद्महे कार्तिकेयाय धीमहि ।
तन्नः स्कन्दः प्रचोदयात् १२।

विष्णु:— ओं नारायणाय विद्महे वासुदेवाय धीमहि ।
तन्नो विष्णुः प्रचोदयात् १ ।

ब्रह्मा:-- ओं चतुर्मुखाय विद्महे हिरण्यगर्भाय धीमहि ।
तन्नो ब्रह्मा प्रचोदयात् ।१४।

इन्द्र:— ओं देवराजाय विद्महे वज्रहस्ताय धीमहि ।
तन्नः शक्रः प्रचोदयात् ।१५।

यम:— ओं वैवस्वताय विद्महे दण्ड हस्ताय धीमहि ।
तन्नो यमः प्रचोदयात् ।१६।

काल:— ओं महाकालाय विद्महे मूर्तामूर्ताय धीमहि ।
तन्नः कालः प्रचोदयात् १७।

चित्रगुप्त:— ओं चित्रगुप्ताय विद्महे लेखाकाराय धीमहि ।
तन्नश्चित्रः प्रचोदयात् ।१८।

गायत्र्या वाहिताः सर्वे ग्रहाणामधि देवताः ।
पूजिताः परया भक्त्या पुंसः (स्त्रियः) कुर्वन्तु सद्गतिम् ॥

## प्रत्यधिदेवताः

**अग्नि**— ओं वैश्वानराय विद्महे महाज्वालाय धीमहि ।
तन्नो अग्निः प्रचोदयात् ।१९।

**आपः**— ओं जलेश्वराय विद्महे नीलपुरुषाय धीमहि ।
तन्न आपः प्रचोदयात् ।२०।

**पृथ्वीः**— ओं भूमिव्रव्यै च विद्महे वसुन्धरायै धीमहि ।
तन्नः पृथ्वी प्रचोदयात् ।२१।

**विष्णु**— ओं दामोदराय विद्महे हृषीकेशाय धीमहि ।
तन्नो विष्णु प्रचोदयात् २२।

इन्द्र — ॐ पाकशासनाय विद्महे सहस्राक्षाय धीमहि ।
तन्न इन्द्र प्रचोदयात् ।२३

इन्द्राणीः— ॐ इन्द्रपत्न्यै च विद्महे पुलोमजायै धीमहि ।
तन्नः शची प्रचोदयात् ।२४।

**प्रजापतिः**— ॐ प्रजापतये विद्महे सृष्टिकर्त्रे च धीमहि ।
तन्नः स्रष्टा प्रचोदयात् २५

ॐ सर्प(नागः)—ॐ भुजङ्गेशाय विद्महे नागराजाय धीमहि ।
तन्नः शेषः प्रचोदयात् ।२६।

**ब्रह्माः**— ॐ चतुर्मुखाय विद्महे वेद वक्त्राय धीमहि ।
तन्नो ब्रह्मा प्रचोदयात् ।२७।

प्रार्थना— गायत्र्याऽवाहिता सर्वे ग्रहाप्रत्यधि देवताः ।
पूजिता गन्ध पुष्पाद्यैः प्राणिनां स्युः गतिप्रदा ॥

## पञ्च लोकपाल देवताः

गणेशः— ओं एकदन्ताय विद्महे वक्रदन्ताय धीमहि ।
तन्नो दन्तिः प्रचोदयात् २८।

दुर्गा:— ओं कात्यायन्यै च विद्महे कन्या कुमारी च धीमहि।
तन्नो दुर्गा प्रचोदयात् ।२९।

वायु:— ओं सर्व प्राणाय विद्महे यष्टि हस्ताय धीमहि।
तन्नो वायु प्रचोदयात् ।३०।

आकाश:—ओं आकाशाय विद्महे नभो देवाय धीमहि।
तन्नो व्योम प्रचोदयात् ।३१।

अश्विनीकुमारौ:—ओं दस्र देवाय विद्महे नासत्याय धीमहि।
तन्न: सत्य: प्रचोदयात् ।३२।

प्रार्थना:— गायत्र्यावहिता देवा लोकपालास्तु पञ्च वै।
पूजिता च सदा भक्त्या पच्छन्तु प्राणिनांगतिम्॥

इन्द्र:— ओं देवराजाय विद्महे वज्रहस्ताय धीमहि।
तन्न शक्र प्रचोदयात् ।३३।

अग्नि:— ओं वैश्वानराय विद्महे कालाय धीमहि।
तन्नो अग्नि: प्रचोदयात् ।३४।

यम:— ओं वैवस्वताय विद्महे दण्डहस्ताय धीमहि।
तन्नो यम: प्रचोदयात् ।३५।

निर्ऋति— ओं निशाचराय विद्महे खड्गहस्ताय धीमहि।
तन्नो निर्ऋति: प्रचोदयात् ।३६।

वरुण:— ओं शुद्धहस्ताय विद्महे पाशहस्ताय धीमहि।
तन्नो वरुण: प्रचोदयात् ।३७।

वायु:— ॐ पवन पुरुषाय विद्महे सहस्रमूर्तये च धीमहि।
तन्नो वायु: प्रचोदयात् ।३८।

कुबेर:— ॐ वैश्रवणाय विद्महे पक्षराजाय धीमहि।
तन्न: कुबेर: प्रचोदयात् ।३९।

**ईशानः**— ॐ ईशामाय विद्महे त्र्यम्बकाय धीमहि ।
तन्न ईशः प्रचोदयात् ।४०।

**ब्रह्मा**: - ॐ चतुर्मुखाय विद्महे कमण्डलु धराय धीमहि ।
तन्नो ब्रह्मा प्रचोदयात् ।४१।

**अनन्तः**— ॐ नागेशाय विद्महे शेषनागाय धीमहि ।
तन्नो अनन्तः ·चोदयात् ।४२।

**प्रार्थना**:— गायत्र्यावाह्विता देवा लोकपाला दशैव हि ।
पूजिता च प्रसन्ना वो यच्छन्तु प्राणिनांगतिम् ।।



## ॐ अथ कलशस्थापनम् ॐ

**भूमिस्पर्शः**—ॐ महीद्यौः पृथिवी च न ऽइम यज्ञ मिमिक्षताम् ।
पिपृतान्नो भरीमभिः ।।

**तण्डलपुञ्जम्**:—ॐ ओषधयः समवदन्त सोमेन सह राज्ञा ।
यस्मै कृणोति ब्राह्मणस्तँराजन् पारयामसि ।।

**कलशस्थापनम्**:—ॐ आजिघ्रकलशं मह्या त्वा विशन्त्विन्दवः पुनरूर्ज्जाः ।
निवर्त्तस्व सा नः सहस्रं धुक्ष्वोरुधाराः पयस्वतीः पुनर्म्मा विशताद्रयिः ।।

**जलपूरणम्**: –वरुण·यात्तम्भनमसि वरुणस्य स्कम्भसर्ज्जनी स्थोवरुणस्यऽऋत
सदन्यसि वरुणस्यऽऋतसदनमसि वरुणस्यऽऋतसदनमासीद्

**तीर्थजलम्**—इमम्मे गंगे यमुने सरस्वति शुतुद्रिस्तोमँस च तापरुष्ण्या
असिक्न्या मरुद्वृधे वितस्तयार्जीकीये शृणु ह्यासुषोमया ।।

**गन्धक्षेपः** ॐ त्वां गन्धर्वा ऽअखनस्त्वामिन्द्रस्त्वां बृहस्पतिः ।
त्वामोषध सोमो राजा विद्वान्यक्ष्मादमुच्यत ।।

**सर्वौषधीः**— ॐ याऽओषधी पूर्वाजाता देवेभ्यस्त्रियुगम्पुरा ।
मनैनु बभ्रुणामहँ शतंधामानि सप्त च ।।

दूर्वा:-- ॐ काण्डात्काण्डात्प्ररोहन्ती परुषः परुषस्परि ।
एवा नो दूर्वे प्रतनु सहस्रेण शतेन च ॥

पञ्चपल्लवा — ॐ अश्वत्थेवोनिषदनं पर्णे वो वसतिष्कृता ।
गोभाजऽइत्किला सथयत्सनवथ पुरुषम् ॥

सप्तमृत्तिका — ॐ स्योना पृथिवि नो भवानृक्षरा निवेशना ।
यच्छा नः शर्म सप्रथाः ॥

पूंगीफलम्—ॐ याः फलिनोर्या ऽअफला ऽअपुष्पा याश्च पुष्पिणीः ।
बृहस्पतिः प्रसूतास्ता नो मुञ्चन्त्व ँ हसः ।

पञ्चरत्नम् --ॐ परिवाजपतिः कविरग्निर्हव्यान्यक्रमीत् । दधद्रत्नानिदाशुषे ।

सुवर्णखण्डम्: ओं हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत्
सदाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम ॥

रक्तवस्त्रम्:— ओं सुजातो ज्योतिषा सह शर्म वरूथमासदत्स्वः ।
वासोऽअग्ने विश्वरूप ँ संव्ययस्व विभावसो ।

पूर्णपात्रम्:—- ओं श्रीश्चते लक्ष्मीश्च पत्न्यावहोरात्रे पार्श्वे नक्षत्राणि ।
रूपमश्विनौ व्यात्तम् । इष्णन्निषाणामुम्मऽइषाण सर्वलोकम्मऽइषाण ॥

वरुणावाहनम्:--ओं तत्त्वा यामि ब्रह्मणावन्दमानस्तदाशास्तेयजमानो हविर्भिः
अहेडमानो वरुणेह बोध्युरुश ँसमानऽआयुः प्रमोषीः अस्मिन्कलशे
साङ्गं सपरिवारं सायुधं सशक्तिकं वरुणं आवाहयामि ॥

देवतावाहनम् — ओं कलाः कलाः हि देवानां दानवानां कलाः कलाः ।
संगृह्य निर्मितीयेन कलशस्तेन कथ्यते ।
कलशस्य मुखे विष्णुर्ग्रीवायां तु महेश्वरः ।
मूले तस्य स्थितो ब्रह्मा मध्ये मातृगणाः स्मृताः ॥
कुक्षौ तु सागरा सप्त सप्तद्वीपा वसुन्धरा ।
अर्जुनी गोमती सर्यू चन्द्रभागा सरस्वती ॥
कावेरी कृष्णवेणी च गङ्गा तविषी देविका ।

तापी गोदावरी चैव माहेन्द्री नर्मदा तथा ॥
नदाश्च विबिधा जाता नद्यः सर्वास्तथा परा ।
पृथिव्यां यानि तीर्थानि कलशस्थानि तानि वै ॥
सर्वे समुद्रा सरितस्तीर्थानि जलदा नदाः ।
आयान्तु मम शान्त्यर्थं दुरितक्षयकारकाः ॥
ऋग्वेदोऽथ यजुर्वेदः सामवेदो ह्यथर्वणः ।
अङ्गैश्चसहिताः सर्वे कलशं तु समाश्रिताः ॥
शान्तिः पुष्टिश्च गायत्री सावित्री कलेशे स्थिताः ।
आयान्तु मम शान्त्यर्थं दुरितक्षयकारकाः ॥

**प्रतिष्ठाः**— ओं मनोजूतिर्जुषतामाज्यस्य वृहस्पतिर्यज्ञमिमं तनोत्वरिष्टं यज्ञँसमिमन्दधातु । विश्वेदेवासऽइहमादयन्तामोम्प्रतिष्ठा । कलशे वरणाद्यावाहितदेवताः सुप्रतिष्ठिता वरदा भवन्तु ॥

**कलशस्थदेबपूजाः**- ओं कलशे आवाहितवरुणादि देवताभ्भो नमः । पादयोः पाद्यम् हस्तयोरर्घ्यं । मुखे आचमनीयम् । सर्वांगेषु स्नानीयम् । गन्धाक्षत पुष्पधूपदीपनैवेद्य दक्षिणादि यथासम्भवोपचाराणि समर्पयामि ।

**प्रार्थनाः**— ओं देवदानव संवादे मथ्यमाने महोदधौ ।
उत्पन्नोऽसि तदाकुम्भ विधृतो विष्णुना स्वयम् ॥
त्वत्तये सर्वतीर्थाणि देवाः सर्वे त्वयि स्थिताः ।
त्वयि तिष्ठन्ति भूतानि त्वयि प्राणाः प्रतिष्ठिता ॥
शिवः स्वयं त्वमेवासि विष्णुस्त्वञ्च प्रजापतिः ।
आदित्या वसवोरुद्राः विश्वेदेवाः सपैतृकाः ॥
त्वयि तिष्ठन्ति सर्वेऽपि यतः कामफलप्रदाः ।
त्वत्प्रसाददिमं यज्ञं कर्तुमीहे जलोद्भव ॥
सानिध्यं कुरु मे देव प्रसन्नो भव सर्वदा ।
अनया पूजया कलशे वरुणाद्यावाहितदेवताः प्रीयन्ताम् ।
ओं नमो नमस्ते स्फटिकप्रभाय सुश्वेतहाराय सुमङ्गलाय ।
सुपाशहस्ताय झषासनाय जलाधिनाथाय नमो नमस्ते ॥

## ।। मूर्तिप्राणप्रतिष्ठा ।।

**प्राणप्रतिष्ठा(वैदिक)** — ओं अश्विनौ ते प्राणं दत्तां तेन जीव मित्रावरुनौ ते प्राणं दत्तां तेन जीव बृहस्पतिस्ते प्राणं ददातु तेन जीव ।

  

**(तान्त्रिक प्राणप्रतिष्ठा:**—ओं आं ह्रीं क्रौं यं रं लं वं शं षं सं हं लं क्षं हं स: सोऽहम् अस्या: (ब्रह्मा, विष्णु, शिव, यम, तत्पुरुष,) प्रतिमाया: प्राणा इह प्राणा: ।

**जीव प्रतिष्ठा:**— ओं आं ह्रीं क्रीं यं रं लं वं शं षं सं हं लं क्षं हं स: सोऽहम् अस्या (ब्रह्मा, विष्णु, शिव, यम, तत्पुरुष,) प्रतिमाया: जीव इह स्थित: ।

**इन्द्रिय प्रतिष्ठा:**— ओं आं ह्रीं क्रीं यं रं लं वं शं षं सं हं लं हं स: सोऽहम् अस्या (ब्रह्मा, विष्णु, शिव, यम, तत्पुरुष) प्रितमाया: सर्वेन्द्रियाणि वाङ्मनस्त्वक् चक्षु: श्रोत्र जिह्वा घ्राणपाणि पादपायू पस्थानि इहैवागत्य चिरं तिष्ठन्तु स्वाहा ।

**नेत्रोन्मीलनम्:**—ओं वृत्रस्यासि कनीनकश्चक्षुर्दाऽअसि चक्षुर्मे देहि ।

## ।। ब्रह्मसूक्तम् ।। ।।

ब्रह्म सूक्तमन्त्रैः षोडशोपचारैश्च ब्रह्मपूजाः—

१. **आवाहनम्ः**—ओं तेजोऽसि शुक्रममृतमायुष्पा ऽआयुर्मे पाहि । देवस्य त्वा सवितु प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामा ददे ।१।

२. **आसनम्ः**—ओं इमामगृभ्णन् रशनामृतस्य पूर्वऽआयुषि विदथेषु कव्या सानो ऽअस्मिन्त्सुत ऽआवभूव ऽऋतस्य सामन्त्सरमारपन्ती ।२।

३. **पाद्यमः**—ओं अभिधा ऽअसि भुवनमसि यन्तासि धर्त्ता । सत्वमग्निं वैश्वानरꣳस प्रथसं गच्छ स्वाहाकृतः ।३।

४. **अर्घ्यम्ः**—स्वगात्वा देवेभ्यः प्रजापतये ब्रह्मन्नश्वं भन्त्स्यामि देवेभ्यः । प्रजापतये तेन राध्यासम् । तं बधान देवेभ्य प्रजापतये तेन राध्नुहि ।४।

५. **आचमनीयम्**—ओं प्रजापतये त्वा जुष्टं प्रोक्षामीन्द्राग्निभ्यां त्वा जुष्टं प्रोक्षामि वायवे त्वा जुष्टं प्रोक्षामि विश्वेभ्यस्त्वा देवेभ्यो जुष्टं प्रोक्षामि सर्वेभ्यस्त्वा देवेभ्यो जुष्टं प्रोक्षामि यो ऽअर्वन्तं जिघाꣳसति तमभ्यमीति वरुणः । परो मर्तः परः श्वा ।५

६. **स्नानम्ः**—ओं अग्नये स्वाहा सोमाय स्वाहापां मोदाय स्वाहा सवित्रे स्वाहा वायवे स्वाहा विष्णवे स्वाहेन्द्राय स्वाहा बृहस्पतये स्वाहा मित्राय स्वाहा वरुणाय स्वाहा ।६।

[☼१. **पय स्नानम्ः**— ओं पयः पृथिव्यां पयऽओषधीषु पयोदिव्यन्तरिक्षे पयोधाः पयस्वतीः प्रदिशः सन्तु मह्यम् ।।

२. **शुद्धस्नानम्**—ओं देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यांपूष्णोहस्याभ्याम् एवं सर्वत्र दधिघृतमधुशर्करा स्नानान्ते ऽपि शुद्धस्नानं प्रयोज्यम् ।।

३. **दधिस्नानम्**— ओं दधिक्राव्णो ऽअकारिषञ्जिष्णोरश्वस्य वाजिनः । सुरभिनो मुखाकरत्प्रणऽआयूꣳषि तारिषत् ।।

४. **घृतस्नानम्**—ओं घृतम्मिमिक्षेघृतमस्य योनिर्घृते श्रितोघृतम्वस्य धाम अनुष्वधमावह मादयस्व स्वाहाकृतंवृषभवक्षिहव्यम् ।।

४. मधुस्नानम्:— ओं मधुवाताऽऋतायते मधु क्षरन्ति सिन्धवः माध्वीर्नः सन्त्वोषधीः। मधुनक्तमुतोषसो मधुमत्पार्थिवꣳरजः । मधुद्यौरस्तु नः पिता । मधुमान्नोवनस्पतिर्मधुमां २अस्तुसूर्यः । माध्वीर्गावो भवन्तु नः ॥

५. शर्करास्नानम्: — ओं अपाꣳरसमुद्वयसꣳसूर्येसन्तꣳसमाहितम् । अपाꣳरसस्ययोरसस्तंवो गृह्णाम्युत्तमुपयामगृहीतोसीन्द्रायत्वा । जुष्टङ् गृह्णाम्येषते योनिरिन्द्राय त्वा जुष्टतमम् ॥

६. तीर्थस्नानम् —ओं इमम्मे गङ्गे यमुने सरस्वति शुतुद्रि स्तोमꣳ सचतापरुष्ण्या । असिक्न्या मरुद्वृधे वितस्तयार्जिकीये शृणु ह्यासुषोमया

७ शुद्धस्नानम्:—ओं शुद्धवालः सर्वशुद्धवालो मणिवालस्तऽआश्विनाः श्येतः श्येताक्षोऽरुणस्ते रुद्राय पशुपतये कर्णायामाऽअवलिप्ता रौद्रा नभोरूपाः पार्जन्याः ।[✲]

७. रक्तवस्त्रम् —ओं हिङ्काराय स्वाहा हिङ्कृताय स्वाहा क्रन्दते स्वाहावक्रन्दाय स्वाहा प्रोथते स्वाहा प्रप्रोथाय स्वाहा गन्धाय स्वाहा घ्राताय स्वाहा निविष्टाय स्वाहोपविष्टाय स्वाहा सन्दिताय स्वाहा वल्गते स्वाहासीनाय स्वाहा शयानाय स्वाहा स्वपते स्वाहा जाग्रते स्वाहा कूजते स्वाहा प्रबुद्धाय स्वाहा विजृम्भमाणाय स्वाहा विचृताय स्वाहा सꣳहानाय स्वाहोपस्थिताय स्वाहायनाय स्वाहा प्रायणाय स्वाहा ।७।

८. यज्ञोपवीतम् —ओं यते स्वाहा धावते स्वाहोद्दावाय स्वाहोद्दुताय स्वाहा शूकाराय स्वाहा शूकृताय स्वाहा निषण्णाय स्वाहोत्थिताय स्वाहा जवाय स्वाहा बलाय स्वाहा विवर्तमानाय स्वाहा विवृत्ताय स्वाहा विधून्वानाय स्वाहा विधूताय स्वाहा शुश्रूषमाणाय स्वाहा शृण्वते स्वाहेक्षमाणाय स्वाहेक्षिताय स्वाहा वीक्षिताय स्वाहा निमेषाय स्वाहा यदत्ति तस्मै स्वाहा यत् पिबति तस्मै स्वाहा यन्मूत्रं करोति तस्मै स्वाहा कुर्वते स्वाहा कृताय स्वाहा ।८।

९. गन्ध — ओं तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि ।
धियो यो नः प्रचोदयात् ॥

१०. पुष्पाणि:— ओं हिरण्यपाणिमुतये सवितारमुप ह्वये ।
स चेत्ता, देवता पदम् ।१०।

११. धूपम्:— ओं देवस्य चेततो मही प्र सवितुर्हवामहे ।
सुमति ऍ सत्यराधसम् ।११।

१२. दीपम — ओं सुष्ठुति ऍ सुमतीवृधो राति ऍ सवितुरीमहे ।
प्र देवाय मतीविदे ।१२।

१३. नैवेद्यम्:— ओं राति ऍ सत्पतिं महे सवितारमुप ह्वये ।
आसव देववीतये १३।

१४. आरती:— ओं देवस्य सवितुर्मतिमासवं विश्वदेव्यम् ।
धिया भगं मनामहे ।१४।

१५. (प्र)दक्षिणा —ओं अग्निऍस्तोमेन बोधय समिधानो ऽअमर्त्यम् ।
हव्या देवेषु नो दधत् ।१५।

१६. पुष्पाञ्जलि — ओं स हव्यवाडमर्त्य उशिग्दूतश्चनोहित: ।
अग्निर्धिया समृण्वति ।१६।

ब्रह्मनमस्कार — अचिन्त्याव्यक्तरूपाय निर्गुणाय गुणात्मने ।
समस्तजगदाधार मूर्तये ब्रह्मणे नम ।।

अंगन्यासक्रम:—हस्तयो: पादयोजान्वो: कट्योनाभौ हृदि क्रमात् ।
कण्ठे बाह्वोर्मुखे नेत्रे मूर्ध्नि वामाङ्गतो न्यसेत् ।।

❂ इति ब्रह्मपूजा ❂

## ॥ विष्णुसूक्तम् ॥

॥ विष्णुसूक्तमन्त्रैः षोडषोपचारैश्च विष्णुपूजा ॥

विष्णुध्यानम् :— शान्ताकारं भुजगशयनं पद्मनाभं सुरेशं
विश्वाधारं गगनसदृशं मेघवर्णं शुभाङ्गम् ।
लक्ष्मीकान्तं कमलनयनं योगिभिर्ध्यानगम्यं
वन्दे विष्णुं भवभयहरं सर्व लोकैकनाथम् ॥

१. आवाहनम् :— ओं सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् ।
स भूमिँसर्वत स्पृत्वात्यतिष्ठद् दशाङ्गुलम् ।१।

२. आसनम् :—ओं पुरुष ऽएवेदँसर्वं यद्भूतं यच्च भाव्यम् ।
उतामृतत्वस्येशानो यदन्नेनातिरोहिति २।

३. पाद्यम् :—ओं एतावानस्य महिमातो ज्यायांश्च पूरुषः ।
पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि ॥

४. अर्घ्यम् :—ओं त्रिपादूर्ध्व ऽउदैतपुरुषः पादो ऽ येहाभवत् पुनः ।
ततो विश्वङ् व्यक्रामत् साशनानशनेऽअभि ।४।

५. आचमनीयम् :—ओं ततो विराडजायत विराजो ऽअधि पूरुषः ।
स जातो ऽअत्यरिच्यत पश्चाद् भूमिमथो पुरः ।५।

६. स्नानम् :—ओं तस्माद् यज्ञात्सर्वहुत सम्भृतं पृषदाज्यम् ।
पशूंस्तांश्चके वायव्यानारण्या ग्राम्याश्च ये ।६।

१. पयःस्नानम् :—ओं पयः पृथिव्यांम्पयष्ओषधीषु पयोदिव्यन्तरिक्षे
पयोधाः पयस्वतीः प्रदिशः सन्तु मह्यम् ॥.

२. शुद्धस्नानम् :—
ओं देवस्यत्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यांपूष्णोहताभ्याम् ।
एवं सर्वत्र दधिघृतमधुशर्करा स्नानान्ते ऽपि शुद्धस्नानं प्रयोज्यम् ॥

३. दधिस्नानम्ः—ओं दधिक्राव्णो ऽअकारिषञ्जिष्णोरश्वस्य वाजिनः ।
सुरभिनो मुखाकरत्प्रणऽआयूꣳषि तारिषत् ।।

४. घृतस्नानम्ः—ओं घृतम्मिमिक्षेघृतमस्य योनिर्घृते श्रितोघृतम्वस्य धाम अनुष्वधमावह मादयस्व स्वाहाकृतंवृषभवक्षिहव्यम् ।।

५. मधुस्नानम्ः-मधुवाताऽऋतायते मधुक्षरन्ति सिन्धव । माध्वीर्नः सन्त्वोषधीः मधुनक्तमुतोषसो मधुमत्पार्थिवꣳरजः । मधुद्यौरस्तु नः पिता । मधुमान्नोवनस्पतिर्मधुमां२अस्तुसूर्यः । माध्वीर्गावोभवन्तु नः ।।

६. शर्करास्नानम्--ओं अपाꣳरसमुद्वयसꣳसूर्येसन्तꣳसमाहितम् । अपाꣳ-रसस्ययोरसस्तम्वो गृह्णाम्युत्तमुपयामगृहोतोसीन्द्रायत्वा । जुष्टङ् गृह्णाम्येषते योनिरिन्द्राय त्वा जुष्टतमम् ।।

७. तीर्थस्नानम्ः— ॐ इमम्मे गङ्गे यमुने सरस्वति शुतुद्रि स्तोमꣳ सचतापरुष्ण्या । असिक्न्या मरुद्वृधे वितस्तयार्जिकीये शृणु ह्यासुषोमया ।

७. शुद्धस्नानम्ः ॐ शुद्धवालः सर्वशुद्धवालो मणिवालस्तऽआश्विनाः श्येतः श्येताक्षोऽरुणस्ते रुद्राय पशुपतये कर्णायामाऽअवलिप्ता रौद्रा नभोरूपाः पार्जन्याः ।)

७. पीतवस्त्रम्ः—ॐ तस्माद् यज्ञात्सर्वहुतऽऋचः सामानि जज्ञिरे ।
छन्दाꣳसि जज्ञिरे तस्माद् यजुस्तस्मादजायत ७।

८. यज्ञोपवीतम्ः—ॐ तस्मादश्वा ऽअजायन्त ये के चोभयादतः ।
गावो ह जज्ञिरे तस्मात्तस्माज्जाता ऽअजावयः ८।

९. गन्धः—ॐ तं यज्ञं वर्हिषि प्रौक्षन् पुरुषं जातमग्रतः ।
तेन देवा ऽअयजन्त साध्या ऽऋषयश्च ये ।९।

१०. तुलसीदलम्ः –ॐ यत् पुरुषं व्यदधुः कतिधा व्यकल्पन् ।
मुखं किमस्यासीत् किं बाहू किमूरू पादाऽउच्येते ।१०।

११. धूपम्ः—ॐ ब्राह्मणो ऽस्य मुखमासीद् बाहू राजन्यः कृतः ।
ऊरू तदस्य यद् वैश्यः पद्भ्याꣳशूद्रोऽअजायत ।११।

११. धूपम्—ॐ ब्राह्मणो ऽस्य मुखमासीद् बाहू राजन्यः कृतः ।
ऊरू तदस्य यद् वैश्यः पद्भ्याᳪशूद्रोऽअजायत । ११।

१२. दीपम्:—ॐ चन्द्रमा मनसो जातश्चक्षोः सूर्यो ऽअजायत ।
श्रोत्राद् वायुश्च प्राणश्च मुखादग्निरजायत । १२।

१३. नैवेद्यम्—ॐ नाभ्याऽआसीदन्तरिक्षᳪशीर्ष्णो द्यौः समवर्तत ।
पद्भ्यां भूमिर्दिशः श्रोत्रात् तथा लोकां २ ऽअकल्पयन् ।१३।

१४. आरती: ॐ, यत् पुरुषेण हविषा देवा यज्ञमतन्वत ।
वसन्तोऽस्यासीदाज्यं ग्रीष्मऽइध्मः शरद्धविः ।१४।

१५. (प्र)दक्षिणा:—ॐ सप्तास्यासन् परिधयस्त्रिः साप्त समिधः कृताः ।
देवा। यद् यज्ञं तन्वानाऽअबध्नन् पुरुषं पशुम् ।१५।

१६. पुष्पाञ्जलि:—ॐ यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन् ।
ते ह नाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः ।१६।

विष्णुनमस्कार:—ॐ सशङ्ख चक्रंसकिरीट कुण्डलं सपीतवस्त्रं सरसिरुहेक्षणम् ।
सहारवक्षः स्थल कौस्तुमश्रियं नमामि विष्णुं शिरसा चतुर्भुजम् ।

इति विष्णुपूजा

## ।। रुद्रसूक्तम् ।।

रुद्र सूक्तमन्त्रैः षोडशोपचारैश्च ब्रह्मपूजा:--

**शिवध्यानम्:**—ॐ शान्ताकारं शिखरशयनं नागमालं महेशं
विश्वाधारं गगनवसनं स्वच्छवर्णं शुभाङ्गम् ।
गौरीकान्तं त्र्यखिलनयनं योगिभिर्ध्यानिगम्यं
वन्दे शम्भुं जगदभयदं सर्वतो विश्वनाथम् ।।

१. **आवाहनम्:**—ॐ नमस्ते रुद्र मन्यव ऽउतो त ऽ इषवे नमः ।
बाहुभ्यामुत ते नमः ।१।

२ **आसनम्:** —ॐ या ते रुद्र शिवा तनूरघोरापापकाशिनी ।
तया नस्तन्वा शन्तमया गिरिशन्ताभि चाकशीहि ।२।

३. **पाद्यम्:**—ॐ यामिषुङ् गिरिशन्त हस्ते बिभर्ष्यस्तवे ।
शिवां गिरित्र तां कुरु मा हिंꣳसीः पुरुषञ्जगत् ।३।

४. **अर्घ्यम्:** ॐ शिवेन बचसा त्वा गिरिशाच्छा बदामसि ।
यथा नः सर्वमिज्जगदयक्ष्मꣳसुमनाऽअसत् ।४।

५. **आचमनीयम्**:—ॐ अध्यवोचदधिवक्ता प्रथमो दैव्यो भिषक् ।
अहींश्च सर्वाञ्जम्भयन्त्सर्वांश्च यातुधान्यो ऽधराचीः परासुव ।५।

६. **स्नानम्**—ॐ असौ यस्ताम्रोऽअरुणऽउत बभ्रुः सुमङ्गलः ।
ये चैनꣳरुद्राऽअभितो दिक्षु श्रिताः सहस्रशोऽवैषाꣳहेडऽईमहे ।६।

[✲१. **पय स्नानम्:** —ओं पयः पृथिव्यां पयऽओषधीषु पयोदिव्यन्तरिक्षे
पयोधाः पयस्वतीः प्रदिशः सन्तु मह्यम् ।।

२. **शुद्धस्नानम्**:—ओं देवस्य त्वा सवितुः प्रसदेऽश्विनोर्बाहुभ्यांपूष्णोहस्याभ्याम्
एवं सर्वत्र दधिघृतमधुशर्करा स्नानान्ते ऽपि शुद्धस्नानं प्रयोज्यम् ।।

३. **दधिस्नानम्**:—ओं दधिक्राव्णो ऽअकारिषञ्जिष्णोरश्वस्य वाजिनः ।
सुरभिनो मुखाकरत्प्रणऽआयूꣳषि तारिषत् ।।

४. घृतस्नानम्:—ओं घृतम्मिमिक्षेघृतमस्य योनिर्घृते श्रितोघृतम्वस्य धाम अनुष्वधमावह मादयस्व स्वाहाकृतंवृषभवक्षिहव्यम् ।।

५. मधुस्नानम्:-मधुवाताऽऋतायते मधुक्षरन्ति सिन्धव । माध्वीर्नः सन्त्वोषधीः मधुनक्तमुतोषसो मधुमत्पार्थिवँरजः । मधुद्यौरस्तु नः पिता । मधुमान्नोवनस्पतिर्मधुमां२अस्तुसूर्यः । माध्वीर्गावोभवन्तु नः ।।

६. शर्करास्नानम्--ओं अपाँरसमुद्वयसँसूर्येसन्तँसमाहितम् । अपाँ-रसस्ययोरसस्तम्वो गृह्णाम्युत्तमुपयामगृहोतोसीन्द्रायत्वा । जुष्टङ् गृह्णाम्येषते योनिरिन्द्राय त्वा जुष्टतमम् ।।

७. तीर्थस्नानम्:—ॐ इमम्मे गङ्गे यमुने सरस्वति शुतुद्रि स्तोमँ सचतापरुष्ण्या । असिक्न्या मरुद्वृधे वितस्तयार्जिकीये शृणु ह्यासुषोमया ।

७. शुद्धस्नानम्: ॐ शुद्धवालः सर्वशुद्धवालो मणिवालस्तऽआश्विनाः श्येतः श्येत क्षोऽरुणस्ते रुद्राय पशुपतये कर्णायामाऽअवलिप्ता रौद्रा नभोरूपाः पार्जन्याः । ❀

७. शुक्लवस्त्रम्:--ॐ असौ योऽवसर्पति नीलग्रीवो विलोहितः ।
उतैनं गोपाऽअदृश्रन्नुदहार्यः स दृष्टो मृडयाति नः ।७।

८. यज्ञोपवीतम्:—ॐ नमो ऽस्तु नीलग्रीवाय सहस्राक्षाव मीढुषे ।
अथो ये ऽअस्य सत्वानोऽहं तेभ्यो ऽकरं नमः ८।

९. गन्धः— ॐ प्रमुञ्च धन्वनस्त्वमुभयोरार्त्न्योर्ज्याम् ।
याश्च ते हस्त ऽइषवः परा ता भगवो वप ।९।

१०. बिल्वपत्रम्:—ॐ विज्यं धनुः कपर्दिनो विशल्यो बाणवां २ ऽउत ।
अनेशन्नस्य या ऽइषव ऽआभुरस्य निषङ्गधिः ।१०।

११. धूपम्:—ॐ या ते हेतिर्मीढुष्टम हस्ते वभूव ते धनुः ।
तयास्मान्विश्वतस्त्वमयक्ष्मया परिभुज ।११।

१२. दीपम्:—ॐ परि ते धन्वनो हेतिरस्मान् वृणक्तु विश्वतः ।
अथो य ऽइषुधिस्तवारे ऽअस्मन्निधेहि तम् ।१२।

१३. **नैवेद्यम्**:— ॐ अवतत्य धनुष्ट्व॑सहस्राक्ष शतेषुधे।
निशीर्य शल्यानां मुखा शिवो नः सुमना भव ।१३।

१४. **आरती**: ॐ नमस्त ऽआयुधायानातताय धृष्णवे ।
उभाभ्यामुत ते नमो बाहुभ्यां तव धन्वने ।१४।

१५. (प्र)**दक्षिणा**:— ॐ मा नो महान्तमुत मा नो ऽ अर्भकं
मा न ऽउक्षन्तमुत मा न ऽ उक्षितम् ।
मा नो बधीः पितरं मोत मातरं
मा नो गोषु मा नो ऽ अश्वेषु रीरिषः ।१५।

१६ **पुष्पाञ्जलि**:-- ॐ मा नस्तोके तनये मा न ऽ आयुषि
मा नो गोषु मानो ऽ अश्वेषु रीरिषः ।

❋ इति रुद्रपूजा ❋

## ।। यमसूक्तम् ।।

यम सूक्तमन्त्रैः षोडशोपचारैश्च यमपूजाः—

१. आवाहनम् —ॐ तदेवाग्निस्तदादित्यस्तद्वायुस्तदु चन्द्रमा।
तदेव शुक्रं तद् ब्रह्म ताऽआपः स प्रजापतिः १।

२. आसनम्:—ॐ सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि।
नैनमूर्ध्वं न तिर्यञ्चं न मध्ये परि जग्रभत्।२।

३. पाद्यम्:—ॐ न तस्य प्रतिमा ऽअस्ति यस्य नाम महद यशः।
हिरण्यगर्भ ऽइत्येष मा मा हिँसीदित्येषा यमान्न जात ऽइत्येषः ३

४. अर्घ्यम्:—ॐ एषो ह देवः प्रदिशोऽनु सर्वाः पूर्वो ह जातः सऽउ गर्भे ऽअन्तः।
स ऽएव जातः स जनिष्यमाण प्रत्यङ् जनास्तिष्ठति सर्वतोमुखः।४।

५. आचमनीयम्:—
ॐ यस्माज्जातं न पुरा किं चनैव यऽ आवभूव भुवनानि विश्वा।
प्रजापतिः प्रजया सँरराणस्त्रीणि ज्योतीँषि सचते स षोडशी।५।

६. स्नानम्—ॐ येन द्यौरुग्रा पृथिवी च दृढा येन स्व स्तभितं येन नाकः।
यो ऽअन्तरिक्षे रजसो विमानः कस्मै देवाय हविषा विधेम।६।

[✲१. पय स्नानम्:—ओं पयः पृथिव्यां पयऽओषधीषु पयोदिव्यन्तरिक्षे
पयोधाः पयस्वतीः प्रदिशः सन्तु मह्यम् ।।

२. शुद्धस्नानम्—ओं देवस्य त्वा सवितुः प्रसदेऽश्विनोर्बाहुभ्यांपूष्णोहस्याभ्याम्
एवं सर्वत्र दधिघृतमधुशर्करा स्नानान्ते ऽपि शुद्धस्नानं प्रयोज्यम् ।।

३. दधिस्नानम्:—ओं दधिक्राव्णो ऽअकारिषञ्जिष्णोरश्वस्य वाजिनः।
सुरभिनो मुखाकरत्प्रणऽआयूँषि तारिषत् ।।

४. घृतस्नानम्:—ओं घृतम्मिमिक्षेघृतमस्य योनिर्घृते श्रितोघृतम्वस्य धाम
अनुष्वधमावह मादयस्व स्वाहाकृतंवृषभवक्षिहव्यम् ।।

५. **मधुस्नानम्**:-मधुवाताऽऋतायते मधुक्षरन्ति सिन्धवः । माध्वीर्नः सन्त्वोषधीः
मधुनक्तमुतोषसो मधुमत्पार्थिवँरजः । मधुद्यौरस्तु नः पिता ।
मधुमान्नोवनस्पतिर्मधुमां२अस्तुसूर्यः । माध्वीर्गावोभवन्तु नः ॥

६. **शर्करास्नानम्**--ओं अपाँरसमुद्वयसँसूर्येसन्तँसमाहितम् । अपाँ-
रसस्ययोरसस्तम्वो गृह्णाम्युत्तमुपयामगृहोतोसीन्द्रायत्वा । जुष्टङ्
गृह्णाम्येषते योनिरिन्द्राय त्वा जुष्टतमम् ॥

७. **तीर्थस्नानम्**:— ॐ इमम्मे गङ्गे यमुने सरस्वति शुतुद्रि स्तोमँ
सचतापरुष्ण्या । असिक्न्या मरुद्वृधे वितस्तयार्जिकीये श्रृणु ह्यासुषोमया।

७. **शुद्धस्नानम्**: - ॐ शुद्धवालः सर्वशुद्धवालो मणिवालस्तऽआश्विनाः श्येतः
श्येताक्षोऽरुणस्ते रुद्राय पशुपतये कर्णायामाऽअवलिप्ता रौद्रा
नभोरूपाः पार्जन्याः ।

७. **नीलवस्त्रम्**:— ॐ यं क्रन्दसी ऽअवसा तस्तभाने
ऽअभ्यैक्षेतां मनसा रेजमाने ।
यत्राधि सूर ऽउदितो विभाति
कस्मै देवाय हविषा विधेम ।
आपो ह यद् बृहतीर्यश्चिदापः ।७।

८. **यज्ञोपवीतम्**:—ॐ वेनस्तत्पश्यन्निहितं गुहा सद्
यत्र विश्वं भवत्येकनीडम् ।
तस्मिन्निदँ सं च वि चैति सर्वँ
स ऽ ओतः प्रोतश्च विभूः प्रजासु ।८।

९. **गन्धः**:—ॐ प्र तद् वोचेदमृतंन्नु विद्वान् गन्धर्वो धाम विभृतं गुहा सत् ।
त्रीणि पदानि निहिता गुहास्य यस्तानि वेद स पितुः पितासत् ।९।

१०. **पुष्पाणि**:—

ॐ स नो बन्धुर्जनिता स विधाता धामानि वेद भुवनानि विश्वा ।
यत्र देवा ऽअमृतमानशानास्तृतीये धामन्नध्यैरयन्त ।१०।

११. धूपम् :–ॐ परीत्य भुतानि परीत्य लोकान् परीत्य सर्वाः प्रदिशो दिशश्च ।
उपस्थाय प्रथमजामृतभ्यात्मनात्मानमभि सं विवेश ।११।

१२. दीपम् :–
ॐ परि द्यावापृथिवी सद्य ऽइत्वा परि लोकान् परि दिशः परि स्व. ।
ऋतस्य तन्तु विततं विचृत्य तदपश्यत् तदभवत् तदासीत् ।१२।

नैवेद्यम् :—ॐ सदसस्पतिमद्भुतं प्रियमिन्द्रस्य काम्यम् ।
सनिं मेधामयासिषँ स्वाहा ।१३।

१४. आरती:– ॐ यां मेधां देवगणाः पितरश्चोपासते ।
तया मामद्य मेधयाग्ने मेधाविनं कुरु स्वाहा ।१४।

१५. (प्र)दक्षिणा:—ॐ मेधां मे वरुणो ददातु मेधामग्निः प्रजापतिः ।
मेधामिन्द्रश्च वायुश्च मेधां धाता ददातु मे स्वाहा ।१५।

१६. पुष्पांजलि —ॐ इदं मे ब्रह्म च क्षत्रं चोभे श्रियमश्नुताम् ।
मयि देवा दधतु श्रियमुत्तमां तस्यै ते स्वाहा ।१६।

इति ब्रह्मपूजा

# ।। तत्पुरुष(प्रेत)सूक्तम् ।।

## ।। तत्पुरुषसूक्तमन्त्रैः षोडशोपचारैश्च तत्पुरुषपूजा ।।

१. आवाहनः—ॐ अपेतो यन्तु पणयो ऽसुम्ना देवपीयवः । अस्य लोकः सुतावंतः।
द्युभिरहोभिरक्तुभिर्व्यक्तं यमो ददात्विवसानमस्मै ।१।

२. आसनम्: —ॐ सविता ते शरीरेभ्यः पृथिव्याँल्लोकमिच्छतु ।
तस्मै युज्यन्तामुस्त्रियाः ।२।

३. पाद्यम: —ॐ वायुः पुनातु सविता पुनात्वग्नेर्भ्राजसा सूर्यस्य वर्चसा ।
वि मुच्यन्तामुस्त्रियाः ।३।

४. अर्घ्यम्: ॐ अश्वत्थे वो निषदनं पर्णे वो वसतिश्कृता ।
गोभाज ऽइत्किलासथयत् सनवथ पूरुषम् ।४।

५. आचमनीयम्:—ॐ सवितां ते शरीराणि मातुरुपस्थ ऽआ वपतु ।
तस्मै पृथिवि शं भव ।

६. स्नानम्:—ॐ प्रजापतौ त्वा देवतायामुपोदके लौके नि दधाम्यसौ ।
अप नः शोशुचदघम् ।६।

१. पयःस्नानम्: —ओं पयः पृथिव्याम्पयऽओषधीषु पयोदिव्यन्तरिक्षे
पयोधाः पयस्वतीः प्रदिशः सन्तु मह्यम् ।।

२. शुद्धस्नानम्:—
ओं देवस्यत्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यांपूष्णोहताभ्याम् ।
एवं सर्वत्र दधिघृतमधुशर्करा स्नानान्ते ऽपि शुद्धस्नानं प्रयोज्यम् ।।

२. दधिस्नानम्:— ॐ दधिक्राव्णो ऽअकारिषञ्जिष्णोरश्वस्य वाजिनः ।
सुरभिनो मुखाकरत्प्रणऽआयूँषि तारिषत् ।२।

३. घृतस्नान्: ॐ घृतम्मिमिक्षेघृतमस्य योनिर्घृते श्रितोघृतम्वस्य धाम ।
अनुष्वधमावह मादयस्व स्वाहाकृतंवृषभ वक्षिहव्यम् ।३।

४. मधुस्नानम्:— ओं मधुवाताऽऋतायते मधु क्षरन्ति सिन्धवः माध्वीर्नः

सन्त्वोषधीः। मधुनक्तमुतोषसो मधुमत्पार्थिवꣳरजः। मधुद्यौरस्तु नः पिता। मधुमान्नोवनस्पतिर्मधुमां २अस्तुसूर्यः। माध्वीर्गावो भवन्तु नः॥

५. शर्करास्नानम् : - ओं अपाꣳरसमुद्वयसꣳसूर्येसन्तꣳसमाहितम्। अपाꣳरसस्ययोरसस्तंवो गृह्णाम्युत्तमुपयामगृहीतोसीन्द्रायत्वा। जुष्टङ् गृह्णाम्येषते योनिरिन्द्राय त्वा जुष्टतमम्।

६. तीर्थस्नानम् —ओं इमम्मे गङ्गे यमुने सरस्वति शुतुद्रि स्तोयꣳ सचतापरुष्ण्या। असिक्न्या मरुद्वृधे वितस्तयार्जिकीये शृणु ह्यासुषोमया

७ शुद्धस्नानम्:—ओं शुद्धवालः सर्वशुद्धवालो मणिवालस्तऽआश्विनाः श्येतः श्येताक्षोऽरुणस्ते रुद्राय पशुपतये कर्णायामाऽअवलिप्ता रौद्रा नभोरूपाः पार्जन्याः।७]

७. कालावस्त्रम् :—

ॐ पर मृत्यो ऽअनु परेहि पन्थां यस्ते ऽअन्य ऽइतरो देवजानात्। चक्षुष्मते शृण्वते ते ब्रवीमि मा न प्रजाꣳ रीरिषो मोतवीरान् ७।

८. यज्ञोपवीतम् :- ॐ शं वात शꣳ हि ते घृणिः शं ते भवन्त्विष्टकाः। शं ते भवन्त्वग्नय. पार्थिवासो मा त्वाभि शूशुचन् ।८।

९. गन्धः—ओं कल्पतां ते दिशस्तुभ्यमापः शिवत मास्तुभ्यं भवन्तु सिन्धवः। अन्तरिक्ष ꣳशिवं तुभ्यं कल्पन्तां ते दिशः सर्वाः ।९।

१०. धूपम् —ॐ अश्मन्वती रीयते सꣳ रभध्वमुत्तिष्ठत प्र तरता सखायः। अत्रा जहीमो ऽशिवा ये ऽअसञ्छिवान् वयमुत्तरेमाभि वाजान् ।१०।

११. दीपम्:— ॐ अपाघम प किल्विषमप कृत्यामपो रपः। अपामार्ग त्वमस्मदप दुष्वप्न्यꣳ सुव ।११।

१२. नैवेद्यम्—ॐ सुमित्रिया न ऽ आप ऽ ओषधयः सन्तु दुर्मित्रियास्तस्मै सन्तु योऽस्मान् द्वेष्टि यं च वयं द्विष्मः ।१२।

१३. आरती: ॐ अनड्वाहमन्वारभामहे सौरभेयꣳ स्वस्तये। स न ऽ इन्द्र ऽइव देवेभ्यो वह्निः सन्तारणो भव ।१३।

१४. (प्र)दक्षिणा:—ॐ उद्वयं तमसस्परि स्व: पश्यन्त ऽ उत्तरम् ।
देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तमम् ।१४।

१६. पुष्पाञ्जलि:—ॐ
इमं जीवेभ्यः परिधिं दधामि मैषां नु गादपरो ऽअर्थमेतम् ।
शतं जीवन्तु शरदः पुरूचीरन्तर्मृत्युं दधतां पर्वतेन ।१६।

यमनमस्कार:—ॐ अग्न ऽआयूꣳषि पवस ऽआ सुवोर्जमिषं च न ।
आरे वाधस्व दुच्छुनाम् ।

इति तत्पुरुषपूजा

## पञ्च सूक्तजापक वरणम्

अद्यैतस्मिन् धर्मशान्तिकर्मणि पञ्च, ब्रह्म, विष्णु, शिव, यम, पुरुषाणां प्रीत्यर्थं अमुकामुक गोत्रा अमुकामुक शर्मणः पञ्च ब्राह्मणान् ब्रह्म, विष्णु, शिव, यम, पुरुष सूक्त जापकान् युष्मानहं वृणे। वृताः स्म इति प्रतिवचनम्।

## पारस्करोक्त कुशण्डिका

१. अथातो गृह्यस्थालीपाकानां कर्म, २. परिसमुह्य, ३. उपलिप्य, ४. उल्लिख्य, ५. उद्धृत्य, ६ अभ्युक्ष्य, ७. अग्निमुपसमाधाय, ८. दक्षिणतो ब्रह्मासनमास्तीर्य, ९. प्रणीय, १०. परिस्तीर्य, ११. अर्थवदासाद्य, १२. पवित्रे कृत्वा, १३. प्रोक्षणीः सत्कृत्य, १४. अर्थवत्प्रोक्ष्य, १५. निरुप्य, १६. आज्यमधिश्रित्य, १७. पर्यग्निं कुर्यात्, १८. स्रुवं प्रतप्य, १९. सम्मृज्य, २०. अभ्युक्ष्य, २१. पुनः प्रतप्य, २२. निदध्यात्, २३. आज्यमुद्वास्य, २४. उत्पूय, २५. अवेक्ष्य, २६. प्रोक्षणीश्च पूर्ववत्, २७. उपयमन कुशानादाय, २८. समिधोऽभ्यादाय, २९. पर्युक्ष्य, ३०. जुहुयाद्, ३१. एष एव विधिर्यत्र क्वचिद्धोमः।

ॐ वैश्वानरं वरदनामानमग्निन्ध्यात्वा।

**पञ्चोङ्कारहोमः**—ओं ओंकाराय स्वाहा, ओं ब्रह्मणे स्वाहा, ओं गोवर्धनेश्वराय स्वाहा, ओं पृथिव्यै स्वाहा, ओं यज्ञेश्वराय स्वाहा।

**मातृकाहोमः**—ओं गौर्ये स्वाहा, ओं पद्मायै०, ओं शच्यै०, ओं मेधायै०, ओं सावित्र्यै०, ओं विजयायै०, ओं जयायै०, ओं देवसेनायै०, ओं स्वधायै०, ओं स्वाहायै०, ओं मातृभ्यः०, ओं लोकमातृभ्यः०, ओं हृष्ट्यै०, ओं पुष्ट्यै०, ओं तुष्ट्यै०, ओं आत्म कुलदेव्यै स्वाहा।

**सप्तमातृका**:—ओं ललितायै स्वाहा, ओं उमायै०, ओं गौर्ये०, ओं अम्बिकायै० ओं सलिलायै०, ओं भगाह्यै०, ओं भगाक्ष्यै स्वाहा। **गृहमातृका**

**मातृकाहोम:**— ओं श्रियै स्वाहा, ओं लक्ष्म्यै०, ओं धृत्यै०, ओं स्वधायै०, ओं स्वाहायै०, ओं सरस्वत्यै स्वाहा— **यज्ञमातृका**

**नवग्रह होम:**—ओं सूर्याय स्वाहा. ओं चन्द्रमसे०, ओं भौमाय०, ओं बुधाय०, ओं वृहस्पतये०, ओं शुक्राय०, ओं शनैश्चराय०, ओं राहवे०, ओं केतवे०

**अधिदेवता:**—ओं त्र्यम्बकाय स्वाहा, ओं उमायै०, ओं स्कन्दाय०, ओं विष्णवे० ओं ब्रह्मणे०, ओं इन्द्राय०, ओं यमाय०, ओं कालाय०, ओं चित्रगुप्ताय०

**प्रत्यधिदेव:** ओं अग्नये स्वाहा, ओं अद्भ्य०, ओं इन्द्राण्यै०, ओं प्रजापतये० ओं सर्पेभ्यः०, ओं ब्रह्मणे स्वाहा।

**पञ्चलोकपाल:** ओं विनायकाय स्वाहा, ओं दुर्गायै स्वाहा, ओं वायवे स्वाहा ओं अकाशाय स्वाहा. ओं अश्विभ्यां स्वाहा।

**दिक्पाल:**—ओं इन्द्राय स्वाहा, ओं अग्नये०, ओं यमाय०, ओं निर्ऋतये० ओं वरुणाय०, ॐ वरुणाय०, ॐ वायवे०, ॐ कुवेराय०. ॐ ईशानाय० ॐ ब्रह्मणे०. ॐ अनन्ताय०, ॐ वा तोष्पतये०. ॐ क्षेत्रपालाय स्वाहा

व्याहृति, पञ्चवारुणी होम. वलिपूर्णाहुति पूर्णपात्रदान वर्हि होम वाद पञ्च श्राद्ध करें।



# ☼ अथ उत्तरपूजा ☼

श्री गणेशमातृकाग्रहादि स्थापितमण्डलाधिष्ठातृ देवताभ्यो नमः ।

**प्रार्थना:**— ब्रह्मा मुरारिस्त्रिपुरान्तकारिर्भानुशशी भूमिसुतो बुधश्च गुरुश्चशुक्रः
शनिराहु केतवः स लोकपालाः शुभदा भवन्तु ।

**व्याहृतिहोम**:—ॐ त्रिव्याहृतीनां विश्वामित्र जमदग्नि भरद्वाज प्रजापतयः ऋषयः अग्निवायुसूर्य प्रजापतयो देवता गायत्र्युष्णिगनुष्टुब्बृहत्यः छन्दांसि प्रायश्चिताज्य होमे विनियोग. ।

ॐ भू स्वाहा इदमग्नये ।१। ॐ भुवः स्वाहा । इदं वायवे ।२। ॐ स्वः स्वाहा । इदं सूर्याय ।३। ॐ भूर्भुवः स्व. स्वाहा । इदं प्रजापतये च मम ।४

**प्रायश्चित्तहोम**—ॐ त्वन्नो अग्ने वरुणस्य विद्वान्देवस्य हेडोऽअवयासिसीष्ठाः। यजिष्ठो वह्नितमः शोशुचानो विश्वाद्वेषाँऽसि प्रमुग्ध्यस्मत् स्वाहा ।

ॐ सत्वन्नोऽअग्नेऽवमोभवोती नेदिष्ठोऽअस्या ऽउषसोव्युष्टौ । अवयक्ष्वनो वरुणँऽरराणो वीहि मृडीकँऽसुहवो न ऽएधि स्वाहा । इदमग्नीवरुणाभ्याम् ।

ॐ अयाश्चाग्नेऽस्यनभिशस्तिपाश्च सत्यमित्वमयाऽअसि । अयानो यज्ञं वहास्य या नो धेहि भेषजँऽ स्वाहा । इदमग्नये अयसे ।

ॐ ये ते शतं वरुण ये सहस्रं यज्ञिया पाशा वितता महान्तः तेभिर्न्नोऽअद्य सवितोत विष्णुर्विश्वे मुञ्चन्तु मरुत स्वर्काः स्वाहा । इदं वरुणाग्नीभ्याम् ।

ॐ उदुत्तमं वरुण पाशमस्मदवाधमं विमध्यमँऽश्रथाय । अथा वयमादित्यव्रते तवानागसोऽअदितये स्याम स्वाहा । इदं वरुणायादित्यादितये । ओं प्रजापतये स्वाहा । इदं प्रजापतये न मम ।

**बलिदानम्**:— साङ्गेभ्यः सपरिवारेभ्यः सायुधेभ्यः सशक्तिकेभ्यः गणमातृका ग्रहाधिदेव प्रत्यधिदेव पञ्चलोकपाल दशदिक्पाल वास्तुक्षेत्रपाल ६४

दधिमाषभक्त बलिं समर्पयामि भो भो गणमातृका मण्डलाधिष्ठातृ देवा दिशं रक्षत बलिं भक्षत दीपं पश्यत मम यजमानस्य सकुटुम्बस्या ऽऽयुष्कर्तारः क्षेमकर्तारः पुष्टिकर्तारस्तुष्टि कर्तारो वरदा भवत । अनेन बलिदानेन सर्वमण्डलाधिष्ठातृ देवाः प्रीयन्तां न मम ।

## ॐ अथ स्विष्टकृद्धोम ॐ

**अग्निपूजा:**— ॐ यदग्ने स्यामिहू त्वं त्वं वा घा स्याऽअहम् ।
स्युष्टे सत्या ऽइहाशिषः । अग्निपूजान्ते ॥

वामहस्ते स्वेष्टपात्रे तिलान् आदाय दक्षिणहस्तेन आज्यपूर्णं स्रुवं गृहीत्वा दक्षिणं जान्वाच्य ब्रह्मणान्वारब्धः ॥

**स्विष्टकृद्धोम:**— ॐ अग्नये स्विष्टकृते स्वाहा । इदमग्नये स्विष्टकृते न मम ।

## ॐ पूर्णाहुति ॐ

रक्तवस्त्रादिवेष्टितं नारिकेलफलं गृहीत्वा ॐ श्री फलाय नमः पूजार्थे गन्धाक्षत पुष्पाणि समर्पयामि "ॐ पूर्णाहुत्यै स्वाहा ।" इति पञ्चोपचारैः सम्पूज्य उत्थाय ।

**विनियोग:**—ॐ पूर्णाहुतिमन्त्रस्य भरद्वाज ऋषि वैश्वानरो देवता त्रिष्टुप्छन्दः पूर्णाहुति होमे विनियोगः ।

**पूर्णाहुतिमन्त्र:**— ॐ मूर्द्धानं दिवो ऽअरतिं पृथिव्या वैश्वानरमृत ऽआजात-मग्निम् । कविᳬसम्राजमतिथिं जनानामासन्ना पात्रं जनयन्त देवा स्वाहा । इदमग्नये वैश्वानराय न मम । ॐ मृडनामाग्नये नमः ।

**वसोर्द्धारा:**— ॐ वसोः पवित्रमसिशतधारं वसोः पवित्रमसि सहस्रधारम् । देवस्त्वा सविता पुनातु वसोः पवित्रेण शतधारेण सुप्वाकामधुक्षः ।

**स्रुवेणभस्मग्रहणम्:**— ओं त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम् ।
उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात् ॥

भस्मधारणम्:—ओं त्र्यायुषं जमदग्नेः—इति ललाटे ।

कश्यपस्य त्र्यायुषम्:- ओं इति ग्रीवायाम् ।

यद्देवेषुत्र्यायुषम्:— इति दक्षिणबाहुमूले ।

तन्नोऽस्तुत्र्यायुषम् इति हृदि वामबाहुमूले च ।

पूर्णपात्रदानम्:—अद्यकृतैतत्धर्मशान्ति होमकर्मणि कृताकृतावेक्षणरूप ब्रह्मकर्म प्रतिष्ठार्थम् इदं पूर्णपात्रं प्रजापतिदैवतम् अमुकगोत्राय अमुकशर्मणे ब्राह्मणाय ब्रह्मदक्षिणात्वेन दातुमहमुत्सृजे ।

इति संकल्प्य ब्रह्मणे पूर्णपात्रं दद्यात् । ब्रह्मग्रन्थिविमोकः ।
प्रोक्षणी पात्रस्थ संस्रव प्राशनम् ।

प्रणीताजलेन शिरो मार्जनम्: — ॐ सुमित्रिया नः ऽआप ओषधयः सन्तु
प्रणीतापात्रस्यैशान्यां दिशि—

विमोकः—ॐ दुर्मित्रियास्तस्मै सन्तु । योऽस्मात्द्वेष्टि यञ्च वयं द्विष्मः ।।

बर्हिहोमः—ॐ देवागातु विदोगातु वित्वागातु मित मनसस्पत । इमं देवं यज्ञ ँ स्वाहाः वातेधा स्वाहा ।

आचार्यादिभ्यो शान्ति दक्षिणां दत्वा ।
आशिषो ग्रहणं यजमानाभिषेकः ।।

ॐ शान्तिः शान्तिः शान्तिः

ततः पञ्च श्राद्ध प्रयोगः शय्यादानादिकं कुर्यात् ।।

# पितृस्तोत्रम्

## ( रुचिसूक्तम् )

अग्निष्वात्ताः पितृगणाः प्राचीं रक्षन्तु मे दिशम् ।
तथा वर्हिषदः पान्तु याम्यां ये पितरः स्मृताः ।१।

प्रतीचीमाज्यपास्तद्वदुदीचौमपि सोमपाः ।
रक्षोभूतपिशाचेभ्यस्तथाचासुरदोषतः ।२।

सर्वतश्चाधिपस्तेषां यमो रक्षां करोतु मे ।
विश्वो विश्वभुगाराध्यो धर्मो धन्यः शुभाननः ।३।

भूतिदो भूतिकृद्भूतिः पितृणां ये गणा नव ।
कल्याणः कल्यताकर्त्ता कल्यः कल्यतराश्रयः ।४।

कल्यताहेतुरनघः षडिमे ते गणाः स्मृताः ।
वरो वरेण्यो वरदः पुष्टिदस्तुष्टिदस्तथा ।५।

विश्वपाता तथा धाता सप्तैवैते तथा गणाः ।
महान्महात्मा महितो महिमावान्महावलः ।६।

गणाः पञ्च तथैवैते पितृणां पापनाशनाः ।
सुखदो धनदश्चान्यो धर्मदोऽन्यश्च भूतिदः ।७।

पितृणां कथ्यते चैतत्तथा गणचतुष्टयम् ।
एकत्रिंशत्पितृगणा यैर्व्याप्तमखिलं जगत् ।८।

ते मेऽनुतृप्तास्तुष्यन्तु यच्छन्तु च सदा हितम् ।
इति 'रुचिप्रजापतिकृतं पितृस्तोत्रम् समाप्तम् ॥'

# अथ धर्म शान्तिः

## ब्राह्मण निमन्त्रम्

**प्रतिज्ञा संकल्प**:—-अद्यामुक गोत्रस्य पितुरमुक शर्मणो मार्गे तीव्र वाताश्म वृष्टि शर्करा कण्टक तप्तवालुका वैतरण्यादि दोष निवृत्ति हेतुना स्वर्ग प्राप्ति कामनया श्वःतने दिने सप्त दशाहे कर्तव्य धर्म शान्ति कर्मणि विष्णु ब्रह्मा शिव यमस्थानीय चतुर्णां तत्पुरुष (पितृ) स्थानीय त्रयोदशानां मिति कृत्वा सप्तदश विप्राणां निमन्त्रणमह करिष्ये।

ब्रह्मा विष्णु शिव तीनों देवताओं की सव्य हो तथा यम तत्पुरुष की अपसव्य होकर संक्षिप्त पूजा करने के पश्चात्—

**ब्राह्मण निमन्त्रणम्** – भगवन् विप्र अमुकगोत्रस्य पितुरमुक शर्मणः (वर्मणः) श्व. करिष्यमाण धर्म शान्ति कर्मणि प्रथम द्वितीय तृतीय देव स्थाने भूरि भोजनार्थमेभि. पुष्पाक्षतादिभिरमुक गोत्रामुकामुक शर्मणः त्रीन् विप्रान् निमन्त्रये।

निमन्त्रितो स्मीति पृथक्-पृथक् ब्राह्मणो वदेत्।

**यमः**-(अपसव्य)—भगवन् विप्र यम स्थाने त्वामहं निमन्त्रये।

**तत्पुरुष**-(अपसव्य)— भगवन् विप्र तत्पुरुष स्थाने त्रयोदश ब्राह्मणान् यथाशक्ति एकं वा त्वामहं निमन्त्रये।

**श्राद्धनियमाः**– अक्रोधनैः शौचपरैः सततं ब्रह्मचारिभिः।
भवितव्यं भवद्भिश्च मया च श्राद्धकमणि॥
सर्वायासविनिर्मुक्तैः कामक्रोध विवर्जितैः।
भवितव्यं भवदिभश्च मया च श्राद्धकर्मणि॥

ततो रजनीं नीत्वा द्वितीये दिने प्रातः धर्म शान्ति कुर्यात्।

---

—धर्मशान्ति विधौ प्रोक्ताः बहवो ब्राह्मणा नृप।
त्रयोदशाश्च हीनैस्तु पञ्च हीन तरैरपि॥—ब्रह्मपुराणे

पूर्ववत् आत्म पूजा करके—

**दिग्रक्षणम्**— अपसर्पन्तु ते भूता ये भूता भुवि संस्थिताः ।
ये चात्र विघ्नकर्तारस्ते गच्छन्तु शिवाज्ञया ।।
अपक्रामन्तु भूतानि पिशाचाः सर्वतो दिशम् ।
सर्वेषामविरोधेन ब्रह्म कर्म समारभे ।।

ॐ प्राच्यै नमः, ॐ अवाच्यै नमः, ॐ प्रतीच्यै नमः, ॐ उदीच्यै नमः, ॐ अन्तरिक्षाय नमः, ॐ यज्ञ भूम्यै नमः ।

**प्रतिज्ञा संकल्पः**—अद्यामुक गोत्रस्य पितुः धर्म शान्ति कर्मणि गौर्यादि षोडश मातृका सहित नवग्रह पूजन पूर्वकं गणेश पूजनमहं करिष्ये ।

**स्वस्त वाचन के पश्चात्**

**गणेश पूजाः**— वक्रतुण्ड महाकाय कोटि सूर्य समप्रभ ।
अविघ्नं कुरू मे देव सर्व कार्येषु सर्वदा ।।

श्री गणेशाय आसनं पाद्यं अर्घ्यं स्नानं वस्त्रोपवस्त्र यज्ञोपवीत गन्धाक्षत पुष्प धूप दीप नैवेद्य फल दक्षिणा ताम्बूल प्रदक्षिणां पुष्पांजलिं समर्पयामि नमः

**श्री पूजनम्**:—ओं श्रीश्चते लक्ष्मीश्च पत्न्यावहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम् । इष्णन्निषाणामुम्मऽइषाण सर्व लोकम्मऽइषाण ।।

**षोडश मातृका पूजनम्**.—ओं गौरीपद्मा शची मेधा सावित्री विजया जया ।
देव सेना स्वधा स्वाहा मातरो लोक मातरः ।।
हृष्टिः पुष्टिःस्तथा तुष्टिरात्मनः कुल देवता ।
गणेशेनाधिकाह्येता वृद्धौ पूज्याश्च षोडश ।।

श्री सहिताभ्यः षोडश मातृकाभ्यः पाद्यादि षोडशोपचारान् समर्पयामि नमः

**नवग्रह पूजनमः** ब्रह्मा मुरारिस्त्रिपुरान्त कारी भानुशशी भूमिसुतो दुधश्च ।
गुरुश्च शुक्राः शनि राहु केतवः सलोक पालाः शुभदा भवन्तु ।।

कहीं कहीं पंजाव में षोडश मातृका सप्त मातृका नवग्रहों का हवन भी किया जाता है । नवग्रहों के मन्त्र पीछे देख कर कुशकण्डिका पूर्वक हवन

करा सकते है ।

पञ्च कलशों के ऊपर पांच देवों की पूजा ( नारायण बलि में देखे ) करें पृष्ठसंख्या

## [ श्राद्ध बिधिः ]

पूर्वाभिमुख होकर आत्म पूजा के पश्चात्—

**दिग्रक्षणम** —ओं नमो नमो नमस्ते गोविन्द पुराण पुरुषोत्तम ।
इदं श्राद्धं हृषीकेश रक्ष त्वं सर्वतो दिशः ॥

ओं प्राच्यै नम, ओं अवाच्यै नमः, ओं प्रतीच्यै नम, ओं उदीच्यै नमः, ओं अन्तरिक्षाय नम, श्राद्धभूम्यै नमः ।

इन मन्त्रों से श्वेत सरसों विखेर कर शेष सरसों और कुशा लेकर धोती की नीवीं में बांध लें ।

**नीवींबन्धः [ अवसव्य ]**— ओं सोमस्य नीवीरसि विष्णोः शर्मासि शर्म यजमानस्येन्द्रस्य योनिरसि सुसस्याः कृषि स्कृधि ।

कुश तिल जल लेकर -

**प्रतिज्ञसंकल्प**.—अद्यामुक गोत्रस्य पितुरमुक शर्मणो मार्गे तीव्र वाताश्मवृष्टि शर्करा कण्टक तप्त वालुका वैतरण्यादि दोष निवृत्ति हेतुना स्वर्ग प्राप्ति कामनया च अद्यतव सप्त दशाह दिने धर्म शान्तिमहं करिष्ये ।

**गायत्री जपः**—ओं देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च ।
नमः स्वहायै स्वधायै नित्यमेव नमो नमः ॥

**भूमिपूजा** — यव पुष्पैः भूम्यै नमः ।

तदनन्तर यव कुश जल लेकर उत्तराभिमुख दायें घुटने टेक कर आसन दान करे—

**ब्रह्मासन दानम्**:—[ देवसव्य ] अद्यामुक गोत्रस्य पितुरमुक शर्मणो मार्गे तीव्र वाताश्म वृष्टि शर्करा कण्टक तप्त वालुका वैतरण्यादि दोष निवृत्ति हेतुना स्वर्गं प्राप्ति कामनया च अद्यतन सप्त दशाह दिने धर्म शान्ति

कर्मणि भगवन् ब्रह्मन् इदमासनं ते नमः।

विष्णोः--अद्यामुक गोत्रस्य पितुरमुक शर्मणो मार्गे तीव्र वाताश्म वृष्टि शर्करा कण्टक तप्त वालुका वैतरण्यादि दोष निवृत्ति हेतुना स्वर्ग प्राप्ति कामनया च अद्यतन सप्त दशाह दिने धर्म शान्ति कर्मणि भगवन् विष्णो इदमासनं ते नमः

पूर्वाभिमुख (आसन छोडे)।

**शिवासनम्**:— [देवसव्य] भगवन् शिव इदमासनं ते नमः। पूर्वाभिमुख।

**भूमिपूजा**.— [तिलजलपुष्प] तिल पुष्पैः भूम्यै नमः।

स्वयं दक्षिणाभिमुख होकर –

**यमासनम्**:— [पितृसव्य] भगवन् यम इदमासनं ते नमः।

दक्षिणाभिमुख आसन छोडे।

**तत्पुरुषासनम** — [पितृसव्य] अद्यामुक गोत्रस्य पितुरमुक शर्मणो मार्गे तीव्र वाताश्म वृष्टि र्करा कण्टक तप्त वालुका वैतरण्यादि दोष निवृत्ति हेतुना स्वर्ग प्राप्ति कामनया च अद्यतन सप्त दशाह दिने धर्म शान्ति कर्मणि पित एतानि त्रयोदश आसनानि त्रयोदशधा विभज्य ते स्वधा।

**एक ब्राह्मणपक्षे** —अद्या० कर्मणि पितः इदमासनं ते स्वधा।

आसन दक्षिण की ओर उत्तराभिमुख कर के रख दें।

आसन स्थापन करे पश्चात् पांच सूक्तों [ब्रह्मा, विष्णु, शिव, यम, तत्पुरुष,] का पाठ करें। यव पुष्प लेकर—

**ब्रह्मावाहनम्**· [देवसव्य] ओं ब्रह्मयज्ञानं प्रथमम्पुरस्ताद्विसीमतः सुरुचोवेन ऽआवः सुबुध्न्या उपमा ऽअस्य विष्ठाः सतश्च योनि मसतश्च विवः।

**विष्णोःआवाहनम्**—[देवसव्य] ओं इदं विष्णुविचक्रमे त्रेधा निदधे पद्म समूढमस्य पाँसुरे।

**रुद्रावाहनम्**:–[देवसव्य] नमस्ते रुद्रमन्य उतोत इषवे नमः। बाहुभ्यामुतते नमः

**यमावाहनम्** —[पितृसव्य] ओं यमाय त्वाङ्गिरस्वते पितृमते स्वाहा।

स्वाहा घर्म्माय स्वाहा घर्मः पित्रे ।

**पित्रावाहनम्**:— [पितृसव्य] ॐ आयन्तु नोः पितरः सोम्यासो ऽग्निष्वाताः पथिभिर्देवयानैः । अस्मिन् कर्मणि स्वधया मदन्तो ऽधिब्रुवन्तु ताऽअस्मान् ।

तीनों देवासनों के आगे अर्घपात्र रख कर प्रत्येक पात्र में पवित्री डाले—

**पवित्रदानम्**:—ओं पवित्रे स्थो वैष्णव्यौ सवितुर्वः प्रसवऽउत्पुनाम्यच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः । तस्य ते पवित्रपते पवित्रपूतस्य यत्कामः पुनेतच्छकेयम्

**अर्घपात्रे जलदानम्**—ओं शन्नो देवीरभिष्टय आपो भवन्तु पीतये । शंयोरभि स्रवन्तु नः ।

**यवक्षेप** –ओं यवो ऽसियवयास्मद् द्वेषो यवयारातीः ।

एक यम तथा त्रयोदश तत्पुरुष अर्धपात्रों में पवित्र तिलजल डालें ।

**पवित्रदानम्**: – ओं पवित्रेस्थो० ।

**जलक्षेप**: – ओं शन्नो देवीरभिष्टय आपो भवन्तु पीतये । शंयोरभि स्रवन्तु नः ।

**तिलक्षेप** — ओं तिलोऽसि सोमदेवत्यो गोसवो देव निर्मितः प्रत्नमद्भिः पृक्तः स्वधया पितृंल्लोकान् प्रीणाहि नः स्वाहा ।

सभी अर्घपात्रों में गन्ध पुष्पादि विना मन्त्र ही डालें ।

प्रथम तीन देवार्घ पात्रों को पृथक् पृथक् बाएं हाथ पर रख कर पात्र से पवित्र निकाल कर भोजनपात्र पर पूर्वाग्र रखकर पवित्र पर जल का छींटा दे कर पात्र को सीधे दायें हाथ से ढक कर निम्नमन्त्र से अभिमन्त्रित करें—

**हस्तार्घपात्राभिमन्त्रणम्**: ॐ या दिव्याऽआपः पयसासम्बभूर्युऽअन्तरिक्षाऽउत्पार्थिवीर्याः । हिरण्यवर्णा यज्ञियास्तानऽआपः शिवाः शँस्योना सुहवा भवन्तु ।।

पितृ सव्य होकर यमार्घपात्र को बाएं हाथ में रखकर पवित्र निकाल कर भोजनपात्र में उत्तराग्र रखें। पवित्र को जल का छींटा देकर पात्र दाएं हाथ से ढक कर—

**पात्राभिमन्त्रणम्**:-ओं या दिव्याऽआपः पयसा सम्बभूर्याऽअन्तरिक्षाऽउतपार्थिवीर्याः हिरण्य वर्णा यज्ञियास्तान ऽआपः शिवाः शᳬस्योना: सुहवा भवन्तु ।

**ब्रह्महस्तार्घदानम्**:—तत्सदद्यामुक गोत्रस्य पितुरमुक शर्मणः पञ्च दैवक श्राद्धे भगवन् ब्रह्मन् एष हस्तार्घस्ते नमः ।

**विष्णुहस्तार्घदानम** —तत्सदद्यामुक गोत्रस्य पितुरमुक शर्मण पञ्चदैवक श्राद्धे भगवन् विष्ण एष हस्तार्घस्ते नमः ।

**यमहस्तार्घदानम्**— [पितृसव्य] अद्यामुक गोत्रस्य पितुरमुक शर्मण. पञ्च देवक श्राद्धे भगवन् धर्मराज [यम] एष हस्तार्घस्ते नमः ।

**तत्पुरुष हस्तार्घदानम**—[पितृसव्य] तत्सदद्यामुक गोत्रस्य पितुरमुक शर्मणः पञ्च दैवक श्राद्धे भगवन् तत्पुरुष एष हस्तार्घ त्रयोदशधा विभज्य ते स्वधा अर्घ दान करके देव अर्घपात्र आसन के दक्षिणभाग में सीधे और यम तथा तत्पुरुष के बामभाग में उलटे कर रख दें ।

**अर्घपात्राणामुत्तानम्** —[देवसव्य] ओं भगवते ब्रह्मणे स्थानमसि ओं भगवते विष्णवे स्थानमसि । ओं भगवते रुद्राय स्थानमसि ।

[पितृसव्य] भगवते यमाय स्थानमसि । भगवते तत्पुरुषाय स्थानमसि ।

तीन देवता एक यम तथा त्रयोदश तत्पुरुष के मोटकों पर वस्त्र सूत्र गंधाक्षत सुपारी इलाइची लौंग मेवा यज्ञोपवीत तथा ज्योंति जगा कर

**देव गन्धादिदानम** —ओं तत्सदद्यामुक गोत्रस्य पितुरमुक शर्मणः सद्‌गति प्राप्त्यर्थं भगवन् ब्रह्मन् विष्णो रुद्र एतानि गंध पुष्प धूप दीप यज्ञोपवीत ताम्बूल कमण्डलु करपात्र स्वर्णांगुलीयक काष्ठ पादुकोर्णासन कार्पास धौतोत्तरीयानि त्रिधा विभज्य वो नमः ।

**यमाय गन्धादिदानम्**: [पितृसव्य]ओं तत्सदद्यामुक पितुरमुक शर्मणः सद्‌गति प्राप्त्यर्थ भगवन् यम एतानि गंध पुष्प धूप दीप यज्ञोपवीत ताम्बूल कमण्डलु कर-पात्र स्वर्णांगुलीयक काष्ठ पादुकोर्णासन कार्पास धौतोत्तरायानि वो नमः ।

**तत्पुरुषाय गन्धादिदानम्** —[पितृसव्य] ओं तत्सद्यामुक गोत्रस्य पितुरमुक शर्मणः सद्गति प्राप्त्यर्थं भगवन् तत्पुरुष एतानि गंध पुष्प धूप दीप यज्ञोपवीत ताम्बूल कमण्डलु करपात्र स्वर्णांगुलीयक काष्ठ पादुकोर्णासन कार्पास धौतोत्तरायानि त्रयोदशधा विभज्य ते स्वधा।

पदक दान के पश्चात् त्रिदेव यम वा तेरह आसनों को जल से भोजन पात्र सहित वेष्टित करके मण्डल बनाये -

**मण्डल करणमन्त्र** – ब्रह्मा विष्णुश्च रुद्रश्च श्रीहुताशन एव च।
मण्डलानि प्रकुर्वन्ति तस्मात्कुर्वीत मण्डलम् ॥

तदनन्तर श्राद्ध में देने योग्य अन्न के अग्र भाग को लेकर घी मिला कर पूर्वाभिमुख होकर पुटकादि में जल डाल कर दो आहुतियां दें।

**आहुतिदानम्:** – अग्नये कव्य वाहनाय स्वाहा।
ओं सोमाय पितृ मते स्वाहा ॥

तीसरी आहुति बिना मन्त्र के अलग सजल पटुक में डाल दें। अगर पराई भूमिपर श्राद्धकर रहे हों तो जल तिल सहित व्यंजन समेत अन्न की आहुती दें।

**भू स्वामि पत्राहुति** —ओं इदमन्नमेतद् भू स्वामि पितृभ्यो नमः।

सव्य हो कर—

**मधुदानम्:**—ओं मधुवाताऽऋतायते मधुक्षरन्ति सिन्धवः। माध्वीर्न्नः सन्त्वोषधीः ओं मधुनक्तमुतोषसो मधुमत्पार्थिवꣳरजः। मधुद्यौरस्तु नः पिता मधुमान्नो वनस्पतिर्मधुमाँ ऽअस्तु सूर्यः। माध्वीर्गावो भवन्तु नः। ओं मधु मधु मध्वितिजपेत्।

**देवपात्राभिमन्त्रणम्:**- [देवसव्य] ओं पृथिवी ते पात्रं द्यौरपिधानं ब्राह्मणस्य मुखे अमृते अमृतं जुहोमि स्वाहा।

**यवक्षेप** —ओं यवोऽसि यवयास्मद् द्वेषो यवयारातीः।

**संकल्प** —[देवसव्य] ओं तत्सदद्यामुक गोत्रास्यामुक पितुरमुक शर्मणः सद्गति प्राप्त्यर्थं भगवन् ब्रह्मन् विष्णो रुद्र एतदन्नं सोपकरणं परिविष्टं परिवेक्ष्य माणं त्रिधा विभज्य वो नमः।

**यमपात्राभिमन्त्रनम्**:—[पितृसव्य] ओं पृथिवी ते पात्रं द्यौरपिधानं ब्राह्मणस्य मुखे अमृते अमृतं जुहोमि स्वाहा ।

**तिलक्षेम**:—[पितृसव्य] ओं तिलोऽसि सोमदेवत्यो गोसवो देवनिर्मित: प्रत्नमद्भि: पृक्त: स्वधया पितृंल्लोकान् प्रीणाहिन: स्वाहा ।।

**तत्पुरुष पानाभिमन्त्रनम्**:—[पितृसव्य] ॐ पृथिवी ते पात्रं द्यौरपिधानं ब्रह्मणस्य मुखे अमृते अमृतं जुहोमि स्वाहा ।

आचमन के पश्चात्—

**क्षमापनम्**:—[देवसव्य] अन्न हीनं क्रिया हीनं विधि हीनं च यद्भवेत् ।
तत्सर्वमच्छिद्रमस्तु हरेर्नामानुकीर्तनात् ।।

**गायत्री जप**:—ओं देवताभ्य: पितृभ्यश्च महायोगिभ्य एव च ।
नम: स्वहायै स्वधायै नित्यमेव नमो नम: ।।

तदनन्तर यथा सम्भव ॐ मधुवाता० इति तृचं पठित्वा ॐ रक्षोहणं० ॐ कृणुष्व का पाठ करे ।

**भूमौतिल विकीरणम्**:—ॐ अपहता ऽअसुरा रक्षा౮सि वेदिषद: ।

तदनन्तर तत्पुरुष सहित पञ्च सूक्तों का जप करें ।

**तत्पुरुष मन्त्र**:—ॐ उदीरतमवरऽउत्परास ऽउन्मध्यमा पितर: (मातर:)सोम्यास: असुंय्यऽईयुर वृका ऋतज्ञास्तेनोऽवन्तु पितरो (मातर:) हवेषु ।

कुशाओं से भूमि को प्रोक्षित करके—

**बलिदानम्**—ओं अनग्निदग्धाश्च ये जीवा ये प्रदग्धा: कुले मम ।
भूमौ दत्तेन तृप्यन्तु तृप्ता यान्तु परांगतिम् ।

कुशा पर वलि छोड कर हाथ धोकर पवित्र उतार कर नवीन पवित्र धारण करके आचमन एवं गायत्री मधुवाता सूक्तों का पाठ करें ।

**पुराणपाठ**—सप्त व्याधा दशार्णेषु मृगा: कालंजिरे गिरौ ।
चक्र वाका: शर द्वीपे हंसा: सरसि मानसे ।।

तेऽभिजाताः कुरुक्षेत्रे ब्राह्मणा वेद पारगाः ।
प्रस्थिता दीर्घमध्वानं यूयं किमवसीदथ ।।

तदनन्तर देवसव्य होकर तीन ब्रह्मा विष्णु रुद्र की पिण्ड वेदिका बना लें तथा यम और तत्पुरुष की पिण्ड वेदिका पितृसव्य होकर बना लें ।

देव वेदिका व यम तत्पुरुष देवसव्य तथा पितृसव्य होकर पवित्र से एक एक रेखा करें—

**रेखाकरणमन्त्र**.—ओं अपहताऽअसुरा रक्षाᳪसि वेदिषदः ।

**वेदिकाकरणमन्त्र**:—अयोध्या मथुरा माया काशी कांची अवन्तिका ।
पुरी द्वारावती चैव सप्तैता मोक्ष दायिका ।।

वेदिकाओं पर रेखा करने के पश्चात् पवित्रों को ईशान में रख दें ।

**अगारभ्रमामाणम्**:-ओं ये रूपाणि प्रतिमुंच माना ऽअसुराः सन्तः स्वधया चरन्ति
परापुरो निपुरो ये भरन्त्यग्निष्टां ल्लोकान् प्रणुदात्यस्मात् ।

वेदिकाओं पर देवता के लिए पूर्वाग्र और यम एवं तत्पुष के लिए दक्षिणाग्र कुशा बिछाये ।

**अवनेजनदानम्**:—ओं तत्सदद्यामुक गोत्रस्य पितुरमुक शर्मणः सद्गति प्राप्त्यर्थं
भगवन् ब्रह्म विष्णु रुद्र पिण्ड स्थाने अत्रावने निग्ध्वं त्रिधा विभज्य वोनमः

**यमअवनेजनम्**.— अद्यामुक गोत्रस्य पितुरमुक शर्मणः सद्गति प्राप्त्यर्थं
भगवन् यम पिण्ड स्थाने अत्रावनेनिक्ष्व ते नमः ।

**तत्पुरुषावनेजन**:— अद्यामुक गोत्रस्य पितुरमुक शर्मणः सद्गति प्राप्त्यर्थं
तत्पुरुष पिण्ड स्थाने अत्रावने निक्ष्व ते स्वधा ।

**ब्रह्मपिण्डदानम्**:—ओं तत्सदद्यामुक गोत्रस्य पितुरमुक शर्मणः सद्गति प्राप्त्यर्थं
भगवन् ब्रह्म एष पिण्डस्ते नमः ।

**विष्णुपिण्डदानम्**:- ओं अद्यामुक गोत्रस्य पितुरमुक शर्मणः सद्गति प्राप्त्यर्थं
भगवन् विष्णो एष पिण्डस्ते नमः ।

रुद्र पिण्डदानम् :—ओं तत्सदद्यामुक गोत्रस्य पितुरमुक शर्मण: सद्गति प्राप्त्यर्थं भगवन् रुद्र एष पिण्डस्ते नमः ।

यमपिण्डदानम्:—[पितृसव्य]ओं अद्यामुक गोत्रस्य पितुरमुक शर्मण: सद्गति प्राप्त्यर्थं यम एष पिण्डस्ते नमः ।

तत्पुरुषपिण्डदानम् :—ओं तत्सदद्यामुक गोत्रस्य पितुरमुक शर्मण: सद्गति प्राप्त्यर्थं भगवन् तत्पुरुष एष पिण्डस्ते स्वधा ।

प्रत्यबनेजनदानम् :—ओं तत्सदद्यामुक गोत्रस्य पितुरमुक शर्मण: सद्गति प्राप्त्यर्थं ब्रह्म विष्णु रुद्र पिण्डोपरि प्रत्यवने निग्ध्व वो नमः ।

तत्पुरुषपिण्डे –[पितृसव्य]ओं तत्सदद्यामुक गोत्रस्य पितुरमुक शर्मण: सद्गति प्राप्त्यर्थं यम तत्पुरुष पिण्डोपरि प्रत्यवने निजाथां वां स्वधा ।

गन्धादिदानम् :—ओं तत्सदद्यामुक गोत्रस्य पितुरमुक शर्मण: सद्गति प्राप्त्यर्थं ब्रह्म विष्णु रुद्र पिण्डोपरि एतानि गंध पुष्प धूप दीप नैवेद्य लवंग पुगी फल सूत्र वांसासि त्रिधा विभज्य वो नमः ।

यमगन्धादिदानम्:—ओं तत्सदद्यामुक गोत्रास्य पितुरमुक शर्मण: सद्गति: प्राप्त्यर्थं यम पिण्डोपरि गंध पुष्प धूप दीप नैवेद्य लवंग पूंगी फल सूत्र वांसासि त्रिधा विभज्य ते नमः ।

तत्पुरुष गन्धादिदानम्—ओं तत्सद्यामुक गोत्रस्य पितुरमुक शर्मण: सद्गति प्राप्त्यर्थं तत्पुरुष पिण्डोपरि एतानि गंध पुष्प धूप दीप नैवेद्य लवंग पूंगी फल वासांसि त्रिधा विभज्य ते स्वधा ।

पात्रेषुजलदानम्:- शिवा आप: सन्तु ।

पुष्पादानम्:—ओं पुष्पाणि पान्तु सोमनमस्य मस्तु ।

अक्षता:—अस्त्वक्षतमरिष्टं च ।

यवक्षेप—ओं यवोऽसि यवयास्मद् द्वेषो यवयारातीः ।

अक्षय्योदकदानम्:—[देवसव्य] ओं तत्सदद्यामुक गोत्रस्य पितुरमुक शर्मणः

सद्गति प्राप्त्यर्थं ब्रह्म विष्णु रुद्रेभ्य धूप दीप ताम्बूलं दत्तेतदन्न पानादिकमक्षय्यमस्तु ।

**यम प्रक्षय्योदकदानम्:** [पितृसव्य]ओं तत्सदद्यामुक गोत्रस्य पितुरमुक शर्मण: सद्गति प्राप्त्यर्थं यमाय धूप दीप ताम्बूलं दत्तेतदन्न पानादिकमक्षय्यमस्तु

**तत्पुरुषाय:**—[पितृसव्य] तत्सदद्यामुक गोत्रस्य पितुरमुक शर्मण: सद्गति प्राप्त्यर्थं तत्पुरुषाय धूप दीप ताम्बूलं दत्तेतदन्न पानादिकमक्षय्यमस्तु ।

सव्य करके दक्षिणदिशा की ओर देखता हुआ पिण्डों के ऊपर जलधारा दे

**ब्रह्मविष्णुशिवपिण्डोपरिजलधारा:** – [देवसव्य] अघोरा देवा: सन्तु ।
**यमपुरुषपिण्डोपरि जलधारा:**—[पितृसव्य]अघोरौ: यमपुरुषौस्त: ।

**आशिषो ग्रहणम्**:—ओं गोत्रन्नो वर्द्धतां दातारो नोऽभिवर्द्धन्तां वेदा: सन्ततिरेव च । श्रद्धा च नो माव्यगमद् बहुदेयं च नोऽस्तु ।

अन्नंच नो बहुभवेद तथीं च लभेमहि । याचितारश्च न: सन्तु मा च याचिष्म कंचन एता: सत्या आशिष: सन्तु

सव्यापसव्य होकर पिण्डों पर कुशा बिछा कर -

**पिण्डोपरि दक्षिणाग्रजलधारा:**—ओं ऊर्जं वहन्तीमृतं घृतं पय: कीलालंपरिस्रुतम् स्वधास्थ तर्पयत मे पितृन् ।

तदनन्तर पिण्डो की पिण्डाधार कुशा और कोयले को उठाकर अग्नि में फेंक दें ।

**देव दक्षिणादानम्**.—[सव्यापसव्य ओं अद्यामुक गोत्रस्य पितुरमुक शर्मण: सद्गति प्राप्त्यर्थं धर्म शान्ति पञ्च दैविक श्राद्ध दक्षिणा द्रव्यं रजतं सोमदैवतं ताम्रं सूर्य दैवतं यथा नाम गोत्रेभ्यो सप्तदश ब्राह्मणेभ्यो विभज्य दातुमहमुत्सृजे ।

**सर्वाऽऽहारसंकल्प:**--[सव्यापसव्ए]ओं अद्यामुक गोत्रस्यामुक पितुरमुक शर्मण: सद्गति प्राप्त्यर्थं धर्मशान्ति पंच दैविक श्राद्ध प्रतिष्ठार्थं पंच पुरुषाऽऽहार क्षमं सिद्धान्नं सदक्षिणकं सोपकरणं त्रिभ्य: देवेभ्य: यम देवाय तत्पुरुषाय च पञ्च ब्राह्मणेभ्यो पंचधा विभज्य दातुमहमुत्सृजे ।

तदनन्तर शय्या दानमहं करिष्ये ।

**शय्यादान संकल्प:**— ओं अद्यामुक गोत्रस्यामुक पितुरमुक शर्मंण सद्गति प्राप्त्यर्थं लक्ष्मो नारायण प्रीतये शय्या दानमहं करिष्ये ।

**ब्राह्मण वरणम्:**—अद्यामुक गोत्रस्यामुक शर्मंण: सद्गति प्राप्त्यर्थं अमुक शर्माणं भू देवं शय्या प्रति गृहीतृत्वेन त्वामहं वृणे ।

ब्राह्मण को वरणी देकर मौलि बांधकर पूजादि करके प्रार्थना करे—

**प्रार्थना**— यदर्चनं कृतं विप्र तव विष्णु स्वरूपिण: ।
यदर्थं मम दानं च तुस्मै विष्णु: प्रसीदतु ।।

षोडषोपचार से लक्ष्मी नारायण को पूजा करने के पश्चात्—

**ध्यानम्:** — शान्ताकारं भुजग शयनं पद्मनाभं सुरेशं
विश्वाधारं गगन सदृशं मेघवर्णं शुभाङ्गम् ।।
लक्ष्मी कान्तं कमलनयन योगिभिर्ध्यान गम्यं ।
वन्दे विष्णु भवभय हरं सर्व लोकेक नाथम् ।

शय्या के चारों पावों को जल छिडक कर दाएं सिर वाले पावे को मौलि बांधे ।

**शय्यादानप्रतिज्ञा:**—अद्यामुक गोत्रामुक पितुरमुक शर्मंण: सद्गति प्राप्त्यर्थं श्रुति स्मृति फल प्राप्त्यर्थं इमांशय्यां नूतनां सुघटितां तूलिकोपधान, दम्पती वस्त्र युग्माच्छन्नां पैत्तिलमय, कांस्यमय भाजन सहितां, छत्रोपानह, उत्तानागिरो देवतं श्री लक्ष्मी नारायण हिरण्य मयीं पंचोपचार पूजित प्रतिमा सहितां नैक विध भक्ष्य भोज्य चोष्य पेयादि समन्वितां पक्वान्न सहितां श्री लक्ष्मीनारायण प्रीतये ऽमुक गोत्रममुक शर्म्माणं भूदेवं त्वामहं दातुमहमुत्सृजे ।

**शय्यादानसंकल्प** — अद्य कृतेतत् शय्यादान सांगता सिध्यर्थं इमां दान प्रतिष्ठा अंगी भूता दक्षिणां यथा नाम गोत्राय ब्राह्मणाय दातुमहमुत्सृजे ।

**शय्याप्रदक्षिणा:**—यानि कानि च पापानि जन्मान्तर कृतानि च ।
तानि तानि प्रणश्यन्तु प्रदक्षिण पदे पदे ।।

अक्षत शय्या पर फैंकें ।

प्रार्थना:— यथा न शून्यं शयनं केशवस्य शिवस्य च ।
शय्यामवाप्यशून्यास्तु भवेज्जन्मनि जन्मनि ।।
अनादि निधनो देवः शंख चक्र गदाधरः ।
अक्षय्यः पुण्डरी काक्षः पितुः मोक्ष प्रदोभव ।।

गो दानम्:— ओं अद्यामुक गोत्रस्य पितुरमुक शर्मणः सद्गति प्राप्त्यर्थं इदंहगो निष्क्रयी भूतं द्रव्य यथा नाम गोत्राय ब्राह्मणाय दातुमहमुत्सृजे ।
[ विशेष विधान गो दान में देख लें ]

काकबलि:— काकेभ्यो नमः ।

श्वबलि:— श्वभ्योऽन्नं नमः ।

गो बलि:— गोभ्योऽन्नं नमः ।

आहुतिदानम्:—भू र्भुवः स्वः वरदाग्ने इह तिष्ठ सपुतिष्ठ वरदो भव । मम पूजा गृहाण ।

पंचाहुति दानम्:—ब्रह्मणे स्वाहा, प्रजापतये स्वाहा, कश्यपाय स्वाहा, गृहयाभ्यः स्वाहा, अनुमतये स्वाहा ।

अग्निजलदानम्:—गच्छ गच्छ सुर श्रेष्ठ स्व स्थानं परमेश्वर ।
यत्र ब्रह्मादयो देवाः तत्र गच्छ हुताशन ।।

प्रार्थना— धर्मं देहि धन देहि पुत्रं पौत्रांश्च देहि मे ।
आयुरारोग्यमेश्वर्यं देहि मे हव्य वाहन ।।

सूर्याघ्यम्—नमो वैवस्वते ब्रह्मणे भास्वते विष्णु तेजसे ।
जगत्पवित्रे शुचये सवित्रे कर्म साक्षिणे ।।

प्रार्थना:— नमो धर्म निधानाय नमस्ते कृत्य साक्षिणे ।
नमः प्रत्यक्ष देवाय भास्कराय नमो नमः ।।

आसन बन्धनम्—प्रमादात् कुर्वतां कर्मं प्रच्यवेताध्वरेषु यत् ।
स्मरणादेव तद्विष्णोः सम्पूर्णं स्यादिति श्रुतिः ।
यस्य स्मृत्या च नासोक्त्या तपो यज्ञ क्रियादिषु ।
न्यून सम्पूर्णतां याति सद्यो वन्दे तमच्युतम् ।।

।। इति धर्म शान्तिः ।।

## ।। अथ व्यासोक्त धर्मं शान्तिमहत्वम् ।।

वैशम्पायन उवाचः—कथयस्व प्रसादेन धर्मं शान्ति क्रियां विभो ।
कस्मिन्मासे तिथौ कस्यां विधिना केन तद्वद् ।
कृत्वा किं फलमाप्नोति चैतन्मे कृपया वद ।

श्री व्यास उवाचः– पञ्चत्व वासरात् सप्त दशाहे परिकीर्तिता ।
धर्मं शान्तिर्महापुण्या सर्वं पाप प्रणाशिनी ।।

नरस्य निधने तस्य पुत्रादि कीर्तिबर्द्धना ।
पुत्रादि स्वर् गति श्रेष्ठां धर्म शान्ति तु कारयेत् ।।

मुख्या सप्त दशाहेन मध्या षाण्मासिके तथा ।
कनिष्ठा वर्षं मध्ये तु तत ऊर्ध्वं न कारयेत् ।।

भूता सप्तदशाहेन द्रव्यादीनाभलाभतः ।
एषु मासेषु संकुर्यात् पितृनुद्दिश्य भो द्विज ।।

महा दानमया प्रोक्तं पितृणां स्वर्गं कामिनाम् ।
कार्तिकादि शुभे मासे उत्तरायण गे रवौ ।।

शुक्ल पक्षे ऽथवा कृष्णे द्वदश्यादि शुभे तिथौ ।
शुभ लग्ने मुहूर्त्ते वा शुचौ देशे समाहिता ।।

ब्राह्मणांस्तु समाहूय विधिना शुभलक्षणान् ।
मुनिप्रणीतं विधिना धर्मशान्ति च कारयेत् ।।

तत्पुरुष कृते राजन् बहवो ब्राह्मणाः स्मृताः ।
धर्मं शान्ति विधौ प्रोक्ता बहवो ब्राह्मणाः नृप ।
त्रयोदश विहीनैस्तु पञ्च हीनतरैरपि ।।
( अत्र हीनतरैर्द्रव्यहीनैरित्यर्थः )

।। इति ब्रह्मपुराणे धर्मशान्ति निरूपणम् ।।